म. सा. १ ॥ श्रीगणेशायनमः ॥ ॥ श्रीगुरुभ्योनमः ॥ ॥ स्वस्तिश्रीऋद्धिवृद्धिर्जयोमंगलाभ्युदयश्च ॥ ॥ स्वस्तिश्रीसौख्यधात्रीस्कृतजयजननीतु पद्ध.
ष्टिपुष्टिप्रदात्रीमांगल्योत्साहकर्त्रीगतभवसदसत्कर्मणांव्यंजयित्री ॥ नानासंपद्विधात्रीधनकुलयशसामायुषांवर्द्धयित्रीदुष्टापद्विघ्नहर्त्रीगुण
गणवसनिर्लिख्यतेजन्मपत्री ॥ १ ॥ श्रीआदिनाथप्रमुखाजिनेशाः श्रीपुंडरीकप्रमुखागणेशाः ॥ सूर्यादिखेटर्क्षयुताश्चभावाःशिवा
यसंतुप्रकटप्रभावाः ॥ २ ॥ दशावतारोभुवनैकमल्लोगोपांगनासेवितपादपद्मः ॥ श्रीरामचंद्रः पुरुषोत्तमोयंददातुवः सर्वसमीहितंमे ॥ ३
॥ श्रीमानस्मानवतुभगवान्पार्श्वनाथःप्रियंवोश्रेयोलक्ष्म्यांक्षितिपतिगणैःसादरंस्तूयमानः ॥ भर्त्तुर्यस्यस्मरणकरणात्तेपिसर्वेविवस्व
न्मुख्याःखेटाददतुकुशलंसर्वदादेहभाजाम् ॥ ४ ॥ सूर्यःशौर्यमुखेंदुरुच्चपदवींसन्मंगलंमंगलःसद्बुद्धिंचबुधोगुरुश्चगुरुतांशुक्रः सुखंशं
शनिः ॥ राहुर्बाहुबलं[illegible]रोनुदिपुलंकेतुः[illegible]न्नतिंनित्यंप्रीतिकराभवंतुभ[illegible]तांसर्वेप्रसन्नाग्रहाः ॥ ५ ॥ कल्याणंकमलासनः सभगवान्वि
[illegible]
[illegible]दैवभवतापायुष्मिरंयच्छतु ॥ ६ ॥ सूर्योज्ञानंचनिर्विघ्नताम् ॥ चंद्रज्ञास्फुजिदार्किभौमधिषणाच्छायासुतैरन्विताज्योतिश्चक्रमि
[illegible]माननो[illegible]चगुरुः शुक्रः सशुक्रार्थदः [illegible]हिजपतिः प्रीतिंपरांतन्वतांमांगल्यंविदधातुभूमितनयोबुद्धिंविध
[illegible]नविनन[illegible]पतिः कर्मा[illegible]

लापत्रीत्वियंलिरव्यते ॥८॥ कृतमयानोदकयंत्रसा ... चापिनशंकुधारणम् ॥ परोपदेशात्सम... यबोधकंविलिरव्यतेजन्मफलंनर
म् ॥९॥ ललाटपट्टेलिखिनाविधात्राषष्ठीदिनेयाक्षरमालिकाच ॥ तांजन्मपत्रीप्रकटींविधत्ते दीपोयथावस्तुघनांधकारे ॥ १० ॥ यावन्मेरुध
रापीठेयावच्चंद्रदिवाकरौ ॥ तावन्नंदतुबालोयंयस्यैषाजन्मपत्रिका ॥ ११ ॥ यस्यनास्तिकिलजन्मपत्रिकायाशुभाशुभफलप्रदर्शिनी
॥ अंधकंभवतितस्यजीवितंदीपहीनमिवमंदिरंनिशि ॥ १२ ॥ वंशोविस्तारतांयातुकीर्तिर्यातुदिगंतरे ॥ आयुर्विपुलतांयातुयस्यैषाजन्म
पत्रिका ॥१३॥ यंब्रह्मवेदांतविदोवदंतिपरंप्रधानंपुरुषंतथान्ये ॥ विश्वोद्गतेःकारणमीश्वरंवातस्मैनमोविघ्नविनाशनाय ॥ १४ ॥ आ-
दित्याद्याग्रहाःसर्वेसनक्षत्राःसराशयः ॥ सर्वान्कामान्प्रयच्छंतुयस्यैषाजन्मपत्रिका ॥ १५॥ जननीजन्मसौख्यानांवर्धनीकुलसंपदाम्
पदवीपूर्वपुण्यानांलिख्यतेजन्मपत्रिका ॥ १६॥ एकदंतोमहाबुद्धिः सर्वज्ञोगणनायकः ॥ सर्वसिद्धिकरोदेवोगौरीपुत्रोविनायकः
॥ १७॥ ब्रह्माकरोतुदीर्घायुर्विष्णुःकुर्याच्चसंपदम् ॥ हरोरक्षतुगात्राणियस्यैषाजन्मपत्रिका ॥ १८ ॥ गणाधिपोग्रहाश्चैव गोत्रजामा
नरोग्रहाः ॥ सर्वेकल्याणमिच्छंतुयस्यैषाजन्मपत्रिका ॥ १९ ॥ कल्याणानिदिवामणिःकुशलितांकांतिंकलानांनिधिर्लक्ष्मींक्ष्मातनयोबुध
श्चबुधतांजीवश्चिरंजीवितताम् ॥ साम्राज्यंभृगुजोर्कजोविजयतांराहुर्बलोत्कर्षतांकेतुर्यच्छतुतस्यवांछितमियंपत्रीयदीयोत्तमा ॥ २०
॥ श्रीजन्मपत्रीशुभदीपकेनव्यक्तंभवेद्भाविफलंसमग्रम् ॥ क्षपाप्रदीपेनयथागृहस्थंघटादिजातंप्रकटत्वमेति ॥ २१ ॥ येकुर्वंतिशुभाशुभ

मा॰सा॰ भानिजगतांयच्छंतियेसंपदोयेपूजाबलिदानहोमविधिभिर्निघ्नंतिविघ्नानिच ॥ येसंभोगवियोगजीवितकृतः सर्वेश्वराः खेचरास्तोतिग्मांशुमु पद्ध॰
२ रोगमाग्रहगणाः शांतिंप्रयच्छंतुवः ॥२२॥ येनोत्पाट्यसमूलमंदरगिरिश्छत्रीकृतोगोकुलेराहुर्येनमहाबलीस्फुररिपुःकार्यार्द्धशेषीकृतः ॥
कृत्वात्रीणिपदानियेनवसुधाबद्धोबलिर्लीलयासत्त्वांपातुयुगेयुगेयुगपतिस्त्रैलोक्यनाथोहरिः ॥२३॥ पूषापुष्टिंदिशतुसततंसंततिंशीत
रोचिर्भौमोभाग्यंसितकरसुतःशांतिमांगल्यनित्यम् ॥ जीवोराज्यंचिरंशुभगतांभार्गवोभूमिपात्रंराहुःसौख्यंशिखिनइतितेकीर्तिमभ्यांलि
हांच ॥२४॥ ग्रहाराज्यंप्रयच्छंतिग्रहाराज्यंहरंतिच ॥ ग्रहैर्व्याप्तमिदंसर्वंत्रैलोक्यंसचराचरम् ॥२५॥ उमागौरीशिवादुर्गाभद्राभगवतीत
था ॥ कुलदेव्यश्चचामुंडारक्षंतुबालकंसदा ॥२६॥ अविरलमदजलनिवहंभ्रमरकुलानीकसेवितकपोलम् ॥ अभिमतफलदातारंकामेशं
गणपतिंवंदे ॥२७॥ ॥इतिजैनवैष्णवीप्रशस्तिः॥ ॥ यःपश्चिमाभिमुखसंस्थितविद्यमानोह्यव्यक्तमूर्त्तिपरिवर्तितविश्वभोगः ॥ दुर्लक्ष्य
विक्रमगतिःकृतकर्मलक्ष्योराज्यश्रियंदिशतुवोरहमाणएषः ॥२८॥ ॥इतियावनीप्रशस्तिः॥ ॥ अथाग्रेपद्धतिः॥ ॥ अथश्रीनृपवि
क्रमार्कराज्यात् अमुकसंवत्सरे अमुकशाके करणगताब्द अधिकमास अवमदिन अहर्गणअमुकअयनअमुकगोलगते श्रीसूर्ये अमुक
ऋतौ अमुक मासे अमुकपक्षे अमुकतिथौ अमुकवारे घटीपल अमुकनक्षत्रे घटीपल अमुकयोगे घटीपल अमुककरणे अत्रदिनेसूर्योदयात् २
दिनगतघटीपलअमुकराशिस्थितेश्रीसूर्ये अमुकराशिस्थितेचंद्रे अमुकराशिस्थितेभौमेबुधेगुरौ ... शनौराहौकेतौवाअमुकराशिनवांशे

अमुकलग्नाधिपतौ अमुकराश्यधिपतौ एवंपुण्यतिथौपंचांगशुद्धौशुभग्रहनिरीक्षितकल्याणवतीवेलायांतात्कालिकअमुकलग्नोदयेसंक्रां
तिगतांशघटीपलअयनांशाः घटीपलमिश्रप्रमाणघटीपलदिनार्द्धप्रमाणघटीपलअक्षरनिशार्द्धप्रमाणघटीपलअक्षरदिनप्रमाणघटीपलरा
त्रिप्रमाणघटीपलसंमीलनेअहोरात्रिप्रमाणघटीपलरविभोग्यलंकोदयादृत्तघटीपलउन्नतघटीपलसूर्यपुरुषाकारनक्षत्रंअमुकस्थानेपतितं
तत्रकैलासगिरिशिखरेउमामहेश्वरसंवादेविंशोत्तरीदशाप्रमाणेनआदौअमुकदशामध्येजन्मअमुकसंध्यायांअमुकयाजकेषुवंशोद्भवगं
गानीरपवित्रोपमअमुकान्वयेअमुकगोत्रेअमुकपुत्रअमुकगृहेभार्याअमुकनाम्नीपुत्ररत्नमजीजनत् ॥ अत्रहोराशास्त्रप्रमाणेनअ
मुकनक्षत्रेअमुकचरणेअमुकाक्षरेअमुकस्वरेअमुकयोनौअमुकनाड्यांअमुकगणेअमुकवर्णेअमुकवर्गेअमुकयुंजायांतस्यचिरंजी
वअमुकनामप्रतिष्ठितंसच्चजिनप्रसादाद्दीर्घायुर्भवतु ॥ ॥ अथजन्मकुंडली ॥ ॥ कलियुगफलम् ॥ ॥ संवत्सरफलअयनफल
गोलफलऋतुफलमासफलपक्षफलतिथिफलवारफलदिनजातरात्रिजातफलयोगफलकरणफलगणफलयोनिफलवारायुर्लग्नफल
अंशफलअग्रेचंद्रकुंडलिकाचक्रं चंद्रकुंडलीफलम् ॥ चंद्रात्फलराश्यायुःभावसाधनार्थसूर्यादिकमध्यमस्पष्टसूर्यादिकस्पष्टसूर्यादिकतात्का
लिकभावचक्रविधिफलसूर्यादीनांभावविश्वोपकभावोक्तफलद्वादशभुवनेनवग्रहाणांद्वादशभुवननिरीक्षणविधिः द्वादशभुवनेनवग्रहा
णांफलंद्वादशभुवनेशफलद्वादशभुवनेद्वादशलग्नफलंद्वादशलग्नानांस्वामिफलंषड्वर्गमैत्रीचक्रम् षड्वर्गकुंडलीचक्रंपंचमहापुरुषयोगी

फलंस्कनफाअनफादुरधराकेमद्दुमवोसिवेसिउभयचरीयोगिनीफलरागयोगद्वादशायुः अगतिगतिनवग्रहचक्रनवग्रहफलदीसस्वस्थनव
प्रकारग्रहफलम् ॥ अरिष्टभंगराजयोगगजचक्रम् ॥ अश्वचक्रम् ॥ शतपदचक्रं ॥ सूर्यकालानलचंद्रकालानलयमदंष्ट्रात्रिनाडीयंत्रसर्वतोभद्रच
क्रम् ॥ चंद्रावस्थाचक्रंरश्मिचक्रंरश्मिफलंचउवीसवलतिणरोफल अष्टवर्गअष्टवर्गफलंसर्वाष्टकवर्गचक्रम् मैत्रीचक्रंमहादशाफलंविंशोत्तरीअ
ष्टोत्तरीसंध्यापाचकचक्रंअंतर्दशाचक्रंअंतर्दशाफलंउपदशाचक्रंउपदशाफलम् ॥ ॥ इतिजन्मपत्रीविधिः ॥ ॥ तत्रप्रथमंशाकानयनम्
खंडखाद्योक्तम् ॥ विक्रमादित्यराज्यस्यपंचविंशोत्तरंशतम् ॥ पातयित्वाभवेच्छाकंचैत्रार्द्धात्तिथयः स्मृताः ॥१॥ ॥ इतिशाकः ॥ ॥ तदनंत
रंकरणगताब्दाधिकमासाऽवमाऽहर्गणाद्यायस्मिन्ग्रंथमतेज्ञायंतेतस्मिन्नेवग्रंथेविलोक्यलेख्यं ॥ तदग्रेयुगानयनं ॥ द्वात्रिंशत्सहस्राणि
कलौलक्षचतुष्टयम् ॥ वेदा ४ग्नि ३ नेत्र २ भिर्गुण्यंकृतंत्रेताचद्वापरम् ॥२॥ ॥इतियुगानयनम् ॥ ॥ तत्रकलियुगफलम् ॥ ॥पापात्मादुः
खसंयुक्तोधनहीनोयशवर्जितः ॥ दुष्टबुद्धिर्दुराचारोजायतेचकलौयुगे ॥ इतिकलियुगजातफलम् ॥ ॥अथप्रभवादिषष्टिसंवत्सरानयनविधिः
प्रभवो १ विभवः २ शुक्लः ३ प्रमोदोथ ४ प्रजापतिः ५ ॥ अंगिराः ६ श्रीमुखो ७ भावो ८ युवा ९ धाता १० तथैवच ॥ ईश्वरो ११ बहुधान्यश्च १२ प्रमा
थी १३ विक्रमो १४ वृषः १५ ॥ चित्रभानुः १६ स्वभानुश्च १७ तारणः १८ पार्थिवो १९ व्ययः २० ॥ सर्वजित् २१ सर्वधारीच २२ विरोधी २३ विकृतिः २४ खरः
२५ ॥ नंदनो २६ विजयश्चैव २७ जयो २८ मन्मथ २९ दुर्मुखो ३० ॥ हेमलंबी ३१ विलंबीच ३२ विकारी ३३ शार्वरी ३४ प्लवः ३५ ॥ शुभकृत् ३६ शोभकृत् ३७ क्रो

धी३८ विश्वावसु ३९ पराभवौ ४०॥ प्लवंगः ४१ कीलकः ४२ सौम्यः ४३ साधारण ४४ विरोधकृत् ४५॥ परिधावी ४६ प्रमाथी च ४७ आनंदो ४८ राक्षसो ४९
नलः ५०॥ पिंगलः ५१ कालयुक्तश्च ५२ सिद्धार्थी ५३ रौद्र ५४ दुर्मती ५५॥ दुंदुभी ५६ रुधिरोद्गारी ५७ रक्ताक्षी ५८ क्रोधनः ५९ क्षयः॥६०॥ ॥इतिष
ष्टिसंवत्सरनामानि॥ ॥शाकेंद्रकाले पृथगाकृतिघ्नः २२ शशांकनंदाश्वियुगै ४२९१ स्समेतः॥ शराद्रिवस्विंदु १८७५ हतः सलब्धः षष्ट्यास्तशेषे प्रभवा
दयोऽशः॥१॥ अस्यार्थः॥ शाकविहु ठामें मांडीजै हेठलानैं २२ गुणा कीजे ४२९१ इतरा अंकमाहे मोडि दीजे भाग १८७५ लीजै लब्ध्यांक उपरला शाक
मध्येजोडणा शेषांक रहणा दीजै उपरिलानें भाग ६० का दीजे लब्ध्यांक परिवर्तिकहिए साठि ६० भाग दीधा पछे जो शेष अंक रहे इतिण मांहि १ अवर-
जोडिये पहले प्रभवादिगणीयै अठार इस पंचहुत्तरि १८७५ भाग दीधा पछे जो अंक रह्या था स्क द्वादश गुणा कीजे भाग १८७५ इनका दीजै लब्ध
मास॥ शेषं त्रिंशद्गुणं ३० भाग १८७५ लब्धं दिने शेषं षष्टि ६० गुणं भाग १८७५ लब्धं घटी शेषं षष्टि ६० गुणं भाग १८७५ लब्धं पल पाया सुगत मास
दिने घटी पल संवत्सर का कहणा द्वादश मध्ये शोधणा शेष रहै सु चैत्र शुक्लप्रतिपदादि भोग्य मास घटी पल संवत्सर का कहणा पुनः अवर प्रकारः॥
शाकं रूपाक्षि २१ संयोज्य षष्टिभागेन हर्यते॥ शेषं संवत्सरं ज्ञेयं लब्धं तत्परिवर्तकम्॥१॥ ॥इतिसंवत्सरानयनविधिः॥ ॥अथसंवत्सरफलम्
॥ ॥जातिस्वकुलधर्मात्माविद्यावांश्च महाबलः॥ क्रूरश्च कृतविघ्नश्च जायते प्रभवोदयः॥१॥ स्त्रीस्वभावश्च चपलस्तस्करः सधनी तथा॥ परोप-
कारी पुरुषो जायते विभवोदयः॥२॥ क्षुद्रः शांतः स्वशीलश्च परदाराभिलाषकः॥ परोपकारकर्मा च निर्द्धनी सहि शुक्लजः॥३॥ क्वचिल्लक्ष्मीः क्वचि

द्भार्याबंधुमित्रारिविग्रहः ॥ राजपूज्यप्रधानश्च प्रमोदादिभवोनरः ॥ ४ ॥ प्रजापालनसंतुष्टोदाताभोक्ताबहुप्रजः ॥ विदेशेषुसमाख्यातोवित्तहेतुः
प्रजापतिः ॥ ५ ॥ क्रियाद्याचारसंपन्नोधर्मशास्त्रागमादिषु ॥ आतिथ्यमित्रभक्तोयमंगिरोजातउच्यते ॥ ६ ॥ धनवान्देवभक्तश्चधातुवा
दादिरेवच ॥ पाखंडकृतकर्माचर्थीमुखेनुभवेन्नरः ॥ ७ ॥ भावनांकुरुतेनित्यंकर्मकर्तापुमान्भवेत् ॥ मत्स्यमांसप्रियश्चैवजायतेभाववत्स
रे ॥ ८ ॥ भार्यार्त्तोजलभीतिश्चव्याधिदुःखादिपीडितः ॥ सर्वदाप्रीतिसंयुक्तोयुवसंवत्सरेफलम् ॥ ९ ॥ धनीभोगीतथाकामीपशुपालप्रियो
भवेत् ॥ अर्थधर्मसमायुक्तोनरईश्वरसंभवः ॥ १० ॥ वेदशास्त्ररतोनित्यंकलागंधर्वगायनः ॥ नातिगर्वीसुरापश्चजायतेबहुधान्यके ॥ ११
॥ परदाराभिलाषीचपरद्रव्यरतोनरः ॥ व्यसनीदूतवादीचप्रमाथिनिभवेन्नरः ॥ १२ ॥ संतुष्टोव्यसनेसक्तःसप्रतापोजितेंद्रियः ॥ शूरश्चकृतवि
द्यश्चविक्रमेजायतेनरः ॥ १३ ॥ स्थूलोदरःस्थूलगुल्फोल्पपाणिःकुलापवादीकुलसेवकश्च ॥ धर्मार्थयुक्तोबहुवित्तहारीवृषेप्रजातश्चभवेन्मनु
ष्यः ॥ १४ ॥ तेजस्वीमानिगर्वीचहीनकर्माकृतस्थितिः ॥ देवपूजाप्रियोनित्यंचित्रभानौभवेन्नरः ॥ १५ ॥ सर्वाणिशुभकार्याणिमित्रामित्रफ
लंभवेत् ॥ सर्वसंग्रहकर्ताचस्वभानौजायतेनरः ॥ १६ ॥ सर्वलोकप्रियोनित्यंसर्वधर्मबहिष्कृतः ॥ राजपूजाप्रविनश्चतारणेजायतेनरः
॥ १७ ॥ शिवब्रह्मविकर्माचशठप्रसौख्यप्रदायकः ॥ भव्ययुक्तश्चपापात्मापार्थिवेजायतेनरः ॥ १८ ॥ दाताभोक्ताप्रधानत्वंजन्मकर्मणिसौख्य
कम् ॥ बहुधामिबलाभश्चजायतेव्ययवत्सरे ॥ १९ ॥ जित्वाचसकलांल्लोकान्विष्णुधर्मपरायणः ॥ पुण्यानिसर्वकर्माणिसर्वजिज्जायतेनरः ॥ २० ॥

पितृमातृप्रियोनित्यंगुरुभक्तोभवेन्नरः ॥ शूरःशांतःप्रतापीच सर्वधारिभवोनरः ॥ २१ ॥ विरोधीकर्मशार्दूलोमत्स्यमांसकृतादनः ॥ धर्म
बुद्धिरतोनित्यंप्रशस्तोलोकपूजितः ॥ २२ ॥ चित्रवादीचनृत्यज्ञो गांधर्वोभिन्नसंशयः ॥ दातामानीतथाभोगीविकृतोजायतेनरः ॥ २३
॥ परहिंसापरोमैत्रीपरद्रव्यरतोभवेत् ॥ कुटुंबभारकोत्साहोजायतेखरवत्सरे ॥ २४ ॥ सर्वदाप्रीतिसंयुक्तोगृहेकल्याणकारकः ॥
राजमान्योपिपुरुषोनंदनेजायतेनरः ॥ २५ ॥ कीर्तिरायुर्यशःसौख्यंसर्वकर्मशुभान्वितः ॥ युद्धशूरोरिणासक्तोविजयेवत्सरेफलं ॥ २६
॥ जेतायुद्धेकलत्राणिमित्रामित्रफलंलभेत् ॥ व्यापारकर्मसंयुक्तोजयसंवत्सरेफलम् ॥ २७ ॥ अतिकामीचातिबुद्धिस्तृष्णावान्बहुधनान्वि
तःपुरुषः ॥ निष्ठुरोप्यतिभोगी अबिबलयुक्तोपिमन्मथेजातः ॥ २८ ॥ शुचिःशांतःसुदक्षश्चसर्वत्रगुणपूजितः ॥ परोपकारीवादीचदुर्मुखे
दुर्मुखीप्रियः ॥ २९ ॥ मणिमुक्तास्तथारत्नमष्टधातुसमन्वितः ॥ अदाताकृपणःपूज्योहेमलंबीनरोभवेत् ॥ ३० ॥ अलसःसततंजातोव्याधिदुःख
समन्वितः ॥ कुटुंबधारकोवापिविलंबीजायतेनरः ॥ ३१ ॥ रक्तविकारेणयुक्तोरक्ताक्षःपित्तसंभवः ॥ वनप्रियोधनैर्हीनोविकारीतुभवेन्नरः
॥ ३२ ॥ वेदशास्त्रप्रियोदेवब्राह्मणेशुचिभक्तिमान् ॥ शर्कराररसभोगीचशार्वरीजायतेनरः ॥ ३३ ॥ स्वनिद्रोबहुभोगीचव्यवसायीयशोन्वितः ॥
पूजितःसर्वलोकानांप्लवसंवत्सरेफलम् ॥ ३४ ॥ कर्मवान्सुयशाःप्रोक्तोधर्मशीलस्तपस्करः ॥ प्रजापालःस्वनिष्णातःशुभसंवत्सरेफलम् ३५
स्वचित्तःशांतचित्तश्चशूरोदाताअनेकधा ॥ नातिवृद्धोनपूर्णत्वंशोभनेफलमश्नुते ॥ ३६ ॥ अतिक्रोधमतिःशूरोविज्ञानौषधिसंग्रहः ॥ पराप

वादीसर्वत्रक्रोधसंवत्सरेफलम् ॥ ३७ ॥ छत्रदंडपताकादिचामरादिविभूषितः ॥ प्रधानपुरुषोजातोविश्वसंवत्सरेफलं ॥ ३८ ॥ भयार्त्तःशीत
भीतिश्चकातरोजायतेनरः ॥ अधर्मःपरघातीचपराभवभवोमतः ॥ ३९ ॥ रौद्रस्तस्करकर्माचक्षितिपालोनरेश्वरः ॥ योगाभ्यासरतोनित्यं
प्लवंगेजायतेनरः ॥ ४० ॥ चित्रकर्तासमानश्चस्कर्वीस्याद्ब्राह्मणप्रियः ॥ पितृमातृषुभक्तश्चजायतेकीलकेफलं ॥ ४१ ॥ शुचिःशीलःसमोद
क्षःसप्रतापोजितेंद्रियः ॥ अतिव्याकुलभक्तश्चसौम्येसौम्यफलंभवेत् ॥ ४२ ॥ व्यवसायीचाल्पतुष्टोधर्मकर्मरतःसदा ॥ शीघ्रागमोपितत्रै
वफलसाधारणेमतं ॥ ४३ ॥ विरोधकृतितोजातोविरोधोबांधवैःसह ॥ क्षणंसौम्यःक्षणंहीनोदुर्वारोजायतेनरः ॥ ४४ ॥ स्वल्पबुद्धिःक्रि
यास्वल्पोदेशंभ्राम्यतिमानवः ॥ देवतीर्थप्रियोनित्यंपरिधाविनिजायते ॥ ४५ ॥ सर्वभक्तिप्रियोनित्यंगंधमाल्यानुलेपनैः ॥ शौचक्रि
यानुरक्तश्चप्रमाथिप्रभवोनरः ॥ ४६ ॥ सर्वदानंदसंयुक्तःसर्वदातिथिपूजितः ॥ स्वजनार्थागमोनित्यमानंदेजायतेनरः ॥ ४७ ॥ मत्स्यमां
सप्रियोनित्यंनित्यंलुब्धकवृत्तिमान् ॥ सुराहारीवृथापापीजायतेराक्षसेनरः ॥ ४८ ॥ बहुपुत्राणिमित्राणिद्रव्यलोभीकलिप्रियः ॥ हानिःशो
कस्तथादुःखंनलेजातोभवेन्नरः ॥ ४९ ॥ पित्तप्रकोपसर्वात्मानानाव्याधिरनेकधा ॥ वाहनैश्चसमायुक्तःपिंगलेजायतेनरः ॥ ५० ॥ कृषिवाणि
ज्यकर्ताचतैलभांडादिसंग्रही ॥ क्रयविक्रयकर्ताचकालयुक्तेभवेन्नरः ॥ ५१ ॥ वेदशास्त्रप्रभावज्ञःसिद्धिचित्तश्चकोमलः ॥ सुकुमारोनृ
पैःपूज्यःकविःसिद्धार्थिजोनरः ॥ ५२ ॥ तस्करश्चपलोधृष्टःपरद्रव्यरतःसदा ॥ निंद्यानिसर्वकर्माणिकुरुतेरुद्रसंभवः ॥ ५३ ॥ पापबुद्धिरतोनि-

त्संपापात्मापापसंश्रितः ॥ बोधकर्मसमायोगोदुर्मतीजायतेनरः ॥ ५४ ॥ गीतवाद्यानिशिल्पानिमंत्रमौषधिमेवच ॥ सर्वांगगुणसंपन्नोनरो
दुंदुभिसंभवः ॥ ५५ ॥ वातशोणितसंयुक्तःकफमारुतमेवच ॥ कूटसाक्षीरतश्चैवरुधिरोद्गारिसंभवः ॥ ५६ ॥ देशत्यागोधनभ्रंशः हानिः सर्वत्र
जायते ॥ धृताविवाहिताभार्यारिक्ताक्षेयोनरोभवेत् ॥ ५७ ॥ क्रोधीक्रोधसमुत्पादीसिंहतुल्यपराक्रमः ॥ ब्राह्मणःपरजीवीचक्रोधसंवत्सरे
नरः ॥ ५९ ॥ कुटुंबकलहोनित्यंमद्यवेश्यारतोनरः ॥ धर्माधर्मविचारोनोजायतेक्षयवत्सरे ॥ ६० ॥ ॥ इतिजातकेषष्टिसंवत्सरफलम् ॥
॥ अथषष्टिसंवत्सरेषुद्वादशयुगानिभवंति ॥ यतः ॥ युगंभवेद्वत्सरपंचकेनयुगानिचद्वादश १२ वर्षषष्ट्याः ॥ ॥ इतियुगानयनम् ॥ ॥
॥ अथयुगफलम् ॥ ॥ मद्यमांसप्रियोनित्यंपरदाररतःसदा ॥ कविःशिल्परतःप्राज्ञोजायतेप्रथमेयुगे ॥ १ ॥ वाणिज्येव्यवहारीचधर्मिष्ठःसत्य
संगतः ॥ द्रव्यंलुभ्यतिपापात्मायुगेजातोद्वितीयके ॥ २ ॥ भोक्तादाताकृतप्रज्ञोब्राह्मणोदेवपूजकः ॥ तेजस्वीधनयुक्तश्चतृतीयेफलम-
श्नुते ॥ ३ ॥ वाटिकाक्षेत्रलाभःस्यादोषधीप्रियमानवः ॥ धातुवादेधनेनाशोजायतेचचतुर्युगे ॥ ४ ॥ पुत्रोत्पत्तिःसदाप्रोक्ताधनवांश्चजि
तेंद्रियः ॥ मातृपितृप्रियश्चैवजायतेपंचमेयुगे ॥ ५ ॥ सर्वदाशत्रुनीचश्चसर्वदामहिषीप्रियः ॥ पट्टघातोभयार्तश्चयुगेषष्ठेचजायते ॥ ६ ॥
बहुमित्रप्रियश्चैवव्यापारेकुटिलागतिः ॥ शीघ्रगामीतथाकामीजायतेसप्तमेयुगे ॥ ७ ॥ पापकर्ताचसंतुष्टोव्याधिदुःखान्वितस्तथा ॥
कर्ताचपरहिंसायाजायतेत्वष्टमेयुगे ॥ ८ ॥ वापीकूपतडागादिदेवदीक्षातिथिप्रियः ॥ भूपतिर्ब्रह्मतुल्योजायतेनवमेयुगे ॥ ९ ॥ राजाधि

राजमंत्रीचस्थानप्राप्तिमहासुखः॥ स्त्रैवेषीरूपदाताचजायतेदशमेयुगे॥१०॥बुद्धिमांश्चसुशीलश्चस्थापकश्चासुरद्विषाम्॥ संग्रामेचभ
वेच्छूरोजातएकादशेयुगे॥११॥तेजस्वीचलसन्नात्मानरमध्येमहाजनः॥कृषिवाणिज्यकर्त्ताचजायतेद्वादशेयुगे॥१२॥ ॥इतिद्वादश
युगफलम्॥ ॥अथअयनानयनविधिः॥ ॥मकरादिगतेषड्के सूर्यस्यैवोत्तरायणम्॥ कर्कादिषड्कगेसूर्येदक्षिणायनमुच्यते॥१॥ ॥
इतिअयनानयनविधिः॥ ॥पुनः रत्नमालायांअयनानयनविधिः॥ ॥शशिरपूर्वमृतुत्रयमुत्तरंह्ययनमाहुरहश्चतदामरम्॥भवति
दक्षिणमन्यदृतुत्रयंनिगदितारजनीमरुतांचसा॥१॥ ॥इतिअयनानयनविधिः॥ ॥अथअयनफलम्॥ ॥उत्तरायणेनरोजा
तः सर्वशास्त्रविशारदः॥ धर्मार्थकामशीलश्चगुणवांश्चसुरूपवान्॥१॥याम्यायनेनरोजातःकूटसाक्षीसदानृतः॥अधर्मीचाथरोगी
चबहुव्याधिःसदाभवेत्॥२॥ ॥इतिअयनफलम्॥ ॥मेषादिषड्कगेसूर्येउत्तरोगोलउच्यते॥तुलादिषड्कगेसूर्येयाम्यगोलःसउच्यते
॥१॥ इतिगोलः॥ ॥अथगोलफलम्॥ ॥योजातोत्तरगोलेषुधनवान्विद्ययान्वितः॥पुत्रपौत्रादियुक्तश्चराजमान्योनरोभवेत्॥१॥याम्या
गोलेषुयोजातःसदाससुखवर्जितः॥कूटसाक्षीदुराचारोहीनांगश्चापिनिर्धनः॥२॥ ॥इतिगोलफलम्॥ ॥अथरत्नमालायांऋतोरानयनवि
धिः॥ ॥मृगादिराशिद्वयभानुभोगात्षट्कंऋतूनांशिशिरोवसंतः॥ग्रीष्मश्चवर्षाशरदश्चतद्वद्हेमंतनामाकथितोत्रषष्ठः॥१॥ ॥इतिऋतो- ६
रानयनविधिः॥ ॥अथऋतुफलं॥ रूपयौवनसंपन्नोदीर्घसूत्रोमहोत्कटः॥साधुयुक्तःकामुकश्चशिशिरेजायतेनरः॥१॥ महोद्यमीमनस्वीचते

जस्वीबहुकार्यकृत् ॥ नानादेशरसाभिज्ञोवसंतेजायतेनरः ॥ २॥ बह्वारंभोजितक्रोधोक्षुधालुः कामुकोनरः ॥ दीर्घः शठोबुद्धिमांश्चर्यी-
ष्मेजातः सदाशुचिः ॥ ३॥ गुणवान्भोगयुक्तश्चराजपूज्योजितेंद्रियः ॥ कुशलोर्थानुवादीचवर्षाकालेभवेन्नरः ॥ ४॥ वाणिज्यकृषिवृत्ति
श्चधनधान्यसमृद्धिमान् ॥ तेजस्वीबहुमान्यश्चशरज्जातोभवेन्नरः ॥ ५॥ बहुव्याधिर्हीनतेजाश्वासयुक्तोप्रणिष्ठुरः ॥ ह्रस्वपीनगतोभी
रुर्हेमंतेजायतेनरः ॥ ६॥ इतिऋतुफलं ॥ ॥अथमासफलं ॥ ॥चैत्रेचदृष्टिभाजः स्यात्साहंकारः शुभाकरः ॥ रक्तेक्षणः सरोषश्चस्त्रीलो
लः सभवेत्सदा ॥ १॥ भोगीधनीसुचित्तश्चसक्रोधश्चसुलोचनः ॥ सुरूपोवल्लभः स्त्रीणांमाधवेजायतेनरः ॥ २॥ परदेशरतश्चैवसुभचित्तो
धनान्वितः ॥ दीर्घायुश्चसुबुद्धिश्चज्येष्ठेसुष्ठुधनीभवेत् ॥ ३॥ पुत्रपौत्रान्वितोधर्मीवित्तनाशेनपीडितः ॥ स्कवर्णश्चाल्पसुखितोआषाढे
चभवेन्नरः ॥ ४॥ सुखदुःखेतथाहानौलाभेचसमचित्तकः ॥ स्थूलदेहः सुरूपश्चश्रावणेजायतेनरः ॥ ५॥ नित्यंप्रमोदीजल्पाकः पुत्रयु
क्तः सुखीभवेत् ॥ मृदुभाषीसुशीलश्चशुचिजातोभवेन्नरः ॥ ६ ॥सुरूपश्चसुखैर्युक्तः काव्यकर्त्तापरः शुचिः ॥ गुणवान्धनवान्कामीआश्विने-
जायतेनरः ॥ ७॥सुधनीकामुकोबुद्धिर्दुरात्माक्रयविक्रयी ॥ पापीयान्दुष्टचित्तश्चकार्तिकेजायतेनरः ॥ ८॥ मृदुभाषीधनीधर्मीबहुमित्रः परा
क्रमी ॥ परोपकारीजातश्चमार्गशीर्षेभवेन्नरः ॥ ९॥ शूरउग्रप्रतापीचपितृदेवविवर्जितः ॥ ऐश्वर्यजन्मकारीचपौषेमासेनरोभवेत् ॥ १०॥
मतिमान्धनवांश्चैवशूरोनिष्ठुरभाषकः ॥ कामुकश्चरणधीरोमाघजातोभवेन्नरः ॥ ११॥ शुक्लः परोपकारीचधनविद्यासुखान्वितः ॥ विदेशेभ्र

मतेनित्यंफाल्गुनेजायतेनरः ॥१२॥ ॥इतिजातकेद्वादशमासफलम्॥ ॥अथपक्षफलम्॥ ॥निष्ठुरोदुर्मुखश्चैवस्त्रीद्वेषीमतिहीनकः
॥परप्रेक्षोजनैर्युक्तः कृष्णपक्षेप्रजायते ॥१॥ पूर्णचंद्रनिभःश्रीमान्सोद्यमीबहुशास्त्रवित् ॥ कुशलोज्ञानसंपन्नः शुक्लपक्षेभवेन्नरः॥ २॥
॥इतिपक्षफलम्॥ ॥अथजन्मतिथिफलम्॥ ॥क्रूरसंगोधनैर्हीनः कुलसंतापकारकः ॥व्यसनासक्तचित्तश्चप्रतिपत्तिथिजोनरः ॥१
परदाररतोनित्यंसत्यशौचविवर्जितः ॥ तस्करस्नेहहीनश्चद्वितीयासंभवोनरः ॥२॥ अचेतनोतिविकलोनिर्द्रव्यःपुरुषः सदा ॥ परद्वेष
रतोनित्यंतृतीयायांभवेन्नरः ॥३॥ महाभोगीचदाताचमित्रस्नेहीविचक्षणः ॥ धनसंतानयुक्तश्चचतुर्थ्यांयदिजायते॥४॥ व्यवहारीगुण
ग्राहीपितृमात्रोश्चरक्षकः ॥ दाताभोक्तातनुःप्रीतःपंचमीसंभवोनरः ॥५॥नानादेशाभिगामीचसदाकलहकारकः॥ नित्यंजठरपोषीचष
ष्ठीजातोभवेन्नरः ॥६॥ अल्पतोषीचतेजस्वीसौभाग्यगुणसंयुतः ॥ पुत्रवान्धनसंपन्नःसप्तम्यांजायतेनरः ॥७॥ धर्मिष्ठःसत्यवादीचदा
ताभोक्ताचवत्सलः ॥गुणज्ञःसर्वकार्यज्ञःअष्टमीसंभवोनरः॥८॥ देवताराधकःपुत्रीधनस्त्रीसक्तमानसः॥ शास्त्राभ्यासरतोनित्यंनव-
म्यांजायतेयदि॥९॥ दशम्यांधर्माधर्मज्ञोदेवसेवीचयाजकः॥ तेजस्वीसौख्यसंयुक्तोजायतेमानवःसदा ॥१०॥अल्पतोषीनरेंद्रस्यगेहगामी
शुचिर्भवेत्॥ धनीपुत्रीभवेद्धीमान्एकादश्यांभवेन्नरः॥११॥चपलश्चपलज्ञानीसदाक्षीणवपुःस्मृतः ॥देशभ्रमणशीलश्चद्वादशीजात
कोभवेत् ॥१२॥महासिद्धोमहाप्राज्ञःशास्त्राभ्यासीजितेंद्रियः॥परकार्यरतोनित्यंत्रयोदश्यांयदाभवेत्॥१३॥ धनाढ्योधर्मशीलश्चशूरःसद्वाक्य

पालकः ॥ राजमान्योयशस्वीचचतुर्दश्यांयदाभवेत् ॥१४॥ श्रीमांश्चमतिमांश्चापिमहाभोजनलालसः ॥ उद्यतः परदारेषुआसक्तः पूर्णिमा
भवः ॥१५॥ स्थिरारंभपरिद्वेषीवक्तामूर्खः पराक्रमी ॥ गूढमंत्रीचसज्ज्ञानोऽप्यमावास्याभवोनरः ॥१६॥ ॥ इतिजातकेतिथिफलम् ॥ ॥अ
थ नंदादिपंचतिथिफलम् ॥ ॥ नंदातिथौनरोजातोमहामानीचकोविदः ॥ देवताभक्तिनिष्ठश्चज्ञानीचप्रियवत्सलः ॥१॥ भद्रातिथौबंधुमा
न्योराजसेवीधनान्वितः ॥ संसारभयभीतश्चपरमार्थमतिर्नरः ॥२॥ जयातिथौराजपूज्यः पुत्रपौत्रादिसंयुतः ॥ शूरः शांतश्चदीर्घायुर्मनोवि
ज्ञश्चजायते ॥३॥ रिक्तातिथौवितर्कज्ञः प्रमादीगुरुनिंदकः ॥ शास्त्रज्ञोमदहंताचकामुकश्चनरोभवेत् ॥४॥ पूर्णातिथौधनैःपूर्णोवेदशास्त्रा
र्थतत्ववित् ॥ सत्यवादीशुद्धचेताविज्ञोभवतिमानवः ॥५॥ ॥ इतिपंचकतिथिफलम् ॥ ॥अथजन्मवारफलम् ॥ ॥ व्याधितः सूर्यसंयु
क्तस्तेजस्वीसमरप्रियः ॥ दातादानेमहोत्साहोसूर्यवारेभवेन्नरः ॥१॥ मतिमान्प्रियवाक्शांतोनरेंद्राशयजीविकः ॥ समदुःखसुखःश्रीमा
न्सोमवारेभवेत्पुमान् ॥२॥ वक्रबुद्धिर्जराजीवीरणोत्साहीमहाबली ॥ सेनानीस्तंत्रपालोवाधरापुत्रदिनोद्भवः ॥३॥ लिपिलेखनजीवीस्या-
त्प्रियवाक्पंडितःसुधीः ॥ रूपसंपत्तिसंयुक्तोबुधवासरसंभवः ॥४॥ धनविद्यागुणोपेतोविवेकीजनपूजकः ॥ आचार्यःसचिवोवास्याद्गु
रुवासरसंभवः ॥५॥ चलचित्तः सुरद्वेषीधनक्रीडारतः सदा ॥ बुद्धिमान्सुभगोवाग्मीभृगुवारेभवेन्नरः ॥६॥ स्थिरजःस्थिरगीःक्रूरोदुःखचि
त्तःपराक्रमी ॥ अधोदृक्नीचलोकेशोवृद्धनारीरतःसदा ॥७॥ ॥ इतिवारफलम् ॥ ॥अथजन्मरात्रिदिनफलम् ॥ ॥ सद्धर्मसुयुक्तोबहुपुत्रभो

गीप्रियान्वितोकामनिपीडितांगः॥ यस्मानुयुक्तोमतिमान्सुरूपोभवेन्मनुष्यश्चदिवाप्रसूतः॥१॥ मंदवाक्बहुकामार्तः क्षयरोगीमलीमसः
॥ क्रूरात्माछिन्नपापश्चनिशिजातोभवेन्नरः॥२॥ ॥इतिदिनरात्रिजातफलम्॥ ॥अथजन्मनक्षत्रफलम्॥ ॥सुरूपःसुभगोदक्षःस्थू
लकायोमहाधनी॥अश्विनीसंभवोलोकेजायतेजनवल्लभः॥१॥ अरोगीसत्यवादीचसत्प्राणश्चदृढव्रतः॥ भरण्यांजायतेलोकःसु-
सुखीधनवानपि॥२॥ कृपणःपापकर्माचक्षुधालुर्नित्यपीडितः॥ अकर्मकुरुतेनित्यंकृत्तिकासंभवोनरः॥३॥ धनीकृतज्ञोमेधावीनृप
मान्यःप्रियंवदः॥ सत्यवादीसुरूपश्चरोहिण्यांजायतेनरः॥४॥ चपलश्चतुरोधीरःकूटकर्मास्वकर्मकृत्॥अहंकारीपरद्वेषीमृगेभवति
मानवः॥५॥ कृतघ्नोगर्वितोहीनोनरःपापरतःशठः॥ आर्द्रानक्षत्रसंभूतोधनधान्यविवर्जितः॥६॥ शांतःसुखीचसंभोगीसुभगोजनवल्ल
भः॥पुत्रमित्रादिभिर्युक्तोजायतेचपुनर्वसौ॥७॥ देवधर्मधनैर्युक्तोबहुयुक्तोविचक्षणः॥ पुष्येचजायतेलोकःशांतात्मासुभगःसुखी
॥८॥ सर्वभक्षीकृतांतश्चकृतघ्नोवंचकःखलः॥ आश्लेषायांनरोजातःकृतकर्माहिजायते॥९॥ बहुभृत्योधनीभोगीपितृभक्तोमहोद्यमी
॥चमूनाथोराजसेवीमघायांजायतेनरः॥१०॥ विद्यागोधनसंयुक्तोगंभीरःप्रमदाप्रियः॥पूर्वाफाल्गुनिकाजातःसुखीपंडितपूजितः॥
॥११॥ दांतःशूरोमृदुर्वक्ताधनुर्वेदार्थपंडितः॥ उत्तराफाल्गुनीजातोमहायोद्धाजनप्रियः॥१२॥ असत्यवचनोधृष्टःसुरापोबंधुवर्जितः॥ हस्ते
जातोनरश्चौरोजायतेपारदारकः॥१३॥ पुत्रदारयुतस्तुष्टोधनधान्यसमन्वितः॥देवब्राह्मणभक्तश्चचित्रायांजायतेनरः॥१४॥ त्रिदग्धोधार्मि

कश्चैवकृपणप्रियवल्लभः ॥ रूपशीलो देवभक्तश्चस्वातौजातोभवेन्नरः ॥१५॥ अतिलुब्धोतिमानीचनिष्ठुरः कलहप्रियः ॥ विशाखयांन
रोजातोवेश्याजनरतोभवेत् ॥१६॥ पुरुषार्थप्रवासीचबंधुकार्येसदोद्यमी ॥ अनुराधाभवोलोकः सदाधृष्टश्चजायते ॥१७॥ बहुमित्रप्रधानश्च
कविर्दानाविचक्षणः ॥ ज्येष्ठाजातोधर्मरतोजायतेभूद्रपूजितः ॥१८॥ सुखेनयुक्तोधनवाहनाढ्योहिंस्रोबलाढ्यःस्थिरकर्मकर्ता ॥ प्रतापितारातिं
जनोमनुष्योमूलेकृतीस्याज्जननंप्रपन्नः ॥१९॥ दृष्टमात्रोपकारीचभाग्यवांश्चजनप्रियः ॥ पूर्वाषाढाभवोनूनंसकलार्थविचक्षणः ॥२०॥ ब
हुमित्रोमहाकायोजायतेविजयीसुखी ॥ उत्तराषाढसंभूतःशूरश्चविजयीभवेत् ॥२१॥ कृतज्ञः सुभगोदातासर्वरोगैश्चसंयुतः ॥ श्रीमान्बहुलसंता-
नःश्रवणेजायतेनरः ॥ २२ ॥ गीतप्रियोबंधुमान्यो हेमरत्नैरलंकृतः ॥ जातोनरोधनिष्ठायांशतैकस्यपतिर्भवेत् ॥ २३ ॥ कृपणोधनपूर्णःस्यात्परदा
रोपसेवकः ॥ जातः शतभिषायांचविदेशेकामुकोभवेत् ॥ २४ ॥ वक्तास्कखीप्रजायुक्तोबहुनिद्रोनिरर्थकः ॥ पूर्वभाद्रपदायांचजातोभवतिमा
नवः ॥ २५ ॥ गौरः ससत्त्वोधर्मज्ञः शत्रुघाती परामरः ॥ उत्तराभाद्रपदोद्भूतोनरःसाहसिकोभवेत् ॥ २६ ॥ संपूर्णांगः शुचिर्दक्षः साधुःशू
रोविचक्षणः ॥ रेवतीसंभवोलोकेधनधान्यैरलंकृतः ॥२७॥ ॥ इतिनक्षत्रफलम् ॥ ॥ अथजातकेयोगफलम् ॥ ॥ विष्कंभ-
जातोमनुजोरूपवान्भाग्यवान्भवेत् ॥ नानालंकारसंपूर्णोमहाबुद्धिविशारदः ॥१॥ प्रीतीयोगेसमुत्पन्नोयोषितांवल्लभोभवेत् ॥ तत्वज्ञ-
श्चमहोत्साहीस्वार्थैनित्यकृतोद्यमः ॥२॥ आयुष्मान्नामयोगेचजातोमानीधनीकविः ॥ दीर्घायुःसत्वसंपन्नोयुद्धेचाप्यपराजितः ॥३॥ सौ

भाग्येचसमुत्पन्नोराजमंत्रीसजायते ॥ निपुणःसर्वकार्येषुवनितानांचवल्लभः ॥४॥शोभनेशोभनोबालोबहुपुत्रकलत्रवान् ॥ आतुरः-
सर्वकार्येषुयुद्धभूमौसदोत्सुकः ॥५॥ अतिगंडेचयोजातोमातृहंताभवेच्चसः ॥ गंडांतेषुचजातस्तुतुलहंताप्रकीर्तितः ॥६॥ सुकर्मना
मयोगेतुसुकर्माजायतेनरः ॥ सर्वप्रीतःसुशीलश्चरागीभोगीगुणाधिकः ॥७॥ धृतिमान्धृतियोगीचकीर्तिपुष्टिधनान्वितः ॥ भा
ग्यवान्सुखसंपन्नोविद्यावान्गुणवान्भवेत् ॥८॥ शूलेशूलव्यथायुक्तोधार्मिकःशास्त्रपारगः ॥ विद्यार्थीकुशलोयज्वाजायतेमनु
जःसदा ॥९॥ गंडेगंडव्यथायुक्तोबहुक्लेशोमहाशिराः ॥ ह्रस्वकार्योमहाशूरोबहुभोगीदृढव्रतः ॥१०॥ वृद्धियोगेसुरूपश्चबहुपुत्रक
लत्रवान् ॥ धनवानपिभोक्ताचसत्ववानपिजायते ॥११॥ ध्रुवयोगेचदीर्घायुःसर्वेषांप्रियदर्शनः ॥ स्थिरकर्मातिशक्तश्चध्रुवबुद्धिश्च
जायते ॥१२॥ व्याघातयोगजातश्चसर्वज्ञःसर्वपूजितः ॥ सर्वकर्मकरोलोकेव्याघातीसर्वकर्मसु ॥१३॥ हर्षणेजायतेलोकेमहाभाग्यो
नृपप्रियः ॥ धृष्टःसदाधनैर्युक्तोविद्याशास्त्रविशारदः ॥१४॥ वज्रयोगेवज्रमुष्टिःसर्वविद्यास्त्रपारगः ॥ धनधान्यसमायुक्तोतत्वज्ञो
बहुविक्रमः ॥१५॥ सिद्धियोगेसमुत्पन्नःसर्वसिद्धियुतोभवेत् ॥ दाताभोक्तासुखीकांतोशोकीरोगीचमानवः ॥१६॥ व्यतीपातेनरोजा
तोमहाकष्टेनजीवति ॥ जीवेत्स्याद्भाग्ययोगेनसभवेदुत्तमोनरः ॥१७॥ वरीयान्नामयोगेचबलिष्ठोजायतेनरः ॥ शिल्पशास्त्रकथाभिज्ञोगी
तनृत्यादिकोविदः ॥१८॥ परिघेचनरोजातःसकुलोन्नतिकारकः ॥ शास्त्रज्ञःसुकविर्वाग्मीदाताभोक्ताप्रियंवदः ॥१९॥ शिवयोगेनरोजातोसर्व

कल्याणभाजनः ॥ महादेवसमोलोकेसदाबुद्धियुतोभवेत् ॥२०॥ सिद्धियोगेसिद्धिदातामंत्रसिद्धिप्रवर्तकः ॥ दिव्यनारीसमेतश्चसर्वसंपद्यु
तोभवेत् ॥२१॥ साध्येमनसिवासिद्धिर्व्ययशेषेसुखागमः ॥ दीर्घसूत्रप्रसिद्धश्चजायतेसर्वसंमतः ॥२२॥ शुभेशुभानतैर्युक्तः धनवानपि
जायते ॥ विज्ञानज्ञानसंपन्नोदाताब्राह्मणपूजकः ॥२३॥ शुक्लेसर्वकलायुक्तःसर्वार्थज्ञानवान्भवेत् ॥ कविःप्रतापीशूरश्चधनीसर्वजनप्रियः
॥२४॥ ब्रह्मयोगेमहाविद्वान्वेदशास्त्रपरायणः ॥ ब्रह्मज्ञानरतोनित्यंसर्वकार्येषुकोविदः ॥२५॥ ऐंद्रेभूपकुलेजातोराजाभवतिनिश्चयः ॥अल्पा
युस्तुसुखीभोगीगुणवानपिजायते ॥२६॥ वैधृतौजायतेयस्तुनित्योत्सा-
हीविभूषितः ॥ कुर्वाणोपिजनैःप्रीतिंप्रयात्यप्रियतांनरः ॥२७॥ ॥इ-
तियोगफलम् ॥ ॥अथकरणानयनं ॥ ॥कृष्णपक्षेतिथिर्द्विघ्ना मुनिभिर्भा
गमाहरेत् ॥ शेषांकेनबवाद्यंचतिथ्यादौकरणंविदुः ॥१॥ तिथिर्द्विघ्नाद्विकोना
मधुशुक्लपक्षेसदाबुधैः ॥ शेषांकेसप्तभिर्भागस्तिथ्यादौकरणंमतं ॥२॥ ॥इ
तिकरणानयनं ॥ ॥अथकरणफलं ॥ ॥बवाख्येकरणेजातोमानीधर्मरतः
सदा ॥ शुभमंगलकर्माणिचस्थिरकर्माणिचजायते ॥१॥ बालवाख्येनरोजात-

| कृष्णपक्षेकरणविचारः | | | | | | शुक्लपक्षेकरणविचारः | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ति. | पूर्वदल | उत्तरदल | ति. | पूर्वदल | उत्तरदल | ति. | पूर्वदल | उत्तरदल | ति. | पूर्वदल | उत्तरदल |
| १ | बालव | कौलव | ९ | तैतिल | गर | १ | किंस्तुघ्न | बव | ९ | बालव | कौलव |
| २ | तैतिल | गर | १० | वणिज | भद्रा | २ | बालव | कौलव | १० | तैतिल | गर |
| ३ | वणिज | भद्रा | ११ | बव | बालव | ३ | तैतिल | गर | ११ | वणिज | भद्रा |
| ४ | बव | बालव | १२ | कौलव | तैतिल | ४ | वणिज | भद्राविष्टि | १२ | बव | बालव |
| ५ | कौलव | तैतिल | १३ | गर | वणिज | ५ | बव | बालव | १३ | कौलव | तैतिल |
| ६ | गर | वणिज | १४ | भद्रा | शकुनी | ६ | कौलव | तैतिल | १४ | गर | वणिज |
| ७ | भद्रा | कौलव | ० | चतुष्पद | नाग | ७ | गर | वणिज | १५ | भद्रा | बव |
| ८ | बालव | कौलव | | | | ८ | भद्रा | बव | | | |

स्तीर्थदेवादिसेवकः ॥ विद्यार्थसौख्यसंपन्नोराजमान्यश्चजायते ॥ २ ॥ कौलवाख्येतुजातस्यप्रीतिःसर्वजनैःसह ॥ संगतिर्मित्रवाणैश्चमानवां
श्चप्रजायते ॥ ३ ॥ तैतिले करणेजातः सौभाग्यधनसंयुतः ॥ स्नेहीसर्वजनैःसार्द्धंविचित्राणिगृहाणिच ॥ ४ ॥ गराख्येकृषिकर्माचगृहकार्यपरा
यणः ॥ यद्वस्तुवांछितंतच्चलभ्यतेचमहोद्यमैः ॥ ५ ॥ वाणिज्येकरणेजातो वाणिज्येनैवजीवति ॥ वांछितंलभतेलोकेदशांतरगमागमैः ॥ ६ ॥
अशुभारंभशीलश्चपरदाररतःसदा ॥ कुशलोविषकार्येषुविस्याख्यकरणेनच ॥ ७ ॥ शकुनेकरणेजातःपौष्टिकादिक्रियाकृतिः ॥ औष
धादिषुदक्षश्चभिषक्वृत्तिश्चजायते ॥ ८ ॥ करणेचचतुष्पादेदेवद्विजरतःसदा ॥ गोकर्मागोप्रभुःश्लाघ्यश्चतुष्पदचिकित्सकः ॥ ९ ॥ नागेचक
रणेजातोधीवरप्रीतिकारकः ॥ कुरुतेदारुणंकर्मदुर्भगोलोललोचनः ॥ १० ॥ किंस्तुघ्नकरणेजातःशुभकर्मरतोनरः ॥ तुष्टिंपुष्टिंचमांगल्यंसि
द्धिंचलभतेसदा ॥ ११ ॥ ॥ इतिजातकेकरणफलम् ॥ ॥ अथगणफलम् ॥ ॥ सुंदरोदानशीलश्चमतिमान्सरलःसदा ॥ अल्पभोजीमहाप्राज्ञो
नरोदेवगणोभवेत् ॥ १ ॥ मानीधनीविशालाक्षोलक्ष्यवेधीधनुर्धरः ॥ गौरःपौरजनग्राहीजायतेमानवेगणे ॥ २ ॥ उन्मादीभीषणाकारःसर्वदाक
लिवल्लभः ॥ पुरुषोदुःसहंब्रूतेप्रमेहीराक्षसेगणे ॥ ३ ॥ ॥ इतिगणफलं ॥ ॥ अथयोनिफलम् ॥ ॥ स्वच्छंदःसद्गुणःशूरस्तेजस्वीघर्घ
रेश्वरः ॥ स्वामिभक्तोतुरंगस्ययोन्यांजातोभवेन्नरः ॥ १ ॥ राजमान्योबलीभोगीभूपस्थानविभूषणः ॥ आत्मोत्साहीनरोजातोगजयोनौनसंशयः १०
॥ २ ॥ स्त्रीणांप्रियःसदोत्साहीबहुवाक्यविशारदः ॥ स्वल्पायुश्चनरोजातःपशुयोनौनसंशयः ॥ ३ ॥ दीर्घरोषःसदाक्रूरउपकारंनगृह्यते ॥ चपलो

रसनालौल्यः सर्पयोनौनसंशयः ॥ ४ ॥ सोऽयमःक्षमहोत्साही शूरः स्वज्ञातिविग्रही ॥ मातृपित्रोः सदाभक्तः श्वानयोनौसमुद्भवः ॥ ५ ॥ स्वस्वका
र्येशूरदक्षोमिष्टान्नाहारभोजनः ॥ निर्दयोदुष्टसद्भावीनरोमार्जारयोनिजः ॥ ६ ॥ महद्विक्रमयोद्धापिईश्वरोविभवेश्वरः ॥ परोपकारिणोनि
त्यंमेषयोनिभवेन्नरः ॥ ७ ॥ बुद्धिमान्वित्तसंपूर्णः स्वकार्यकरणोद्यतः ॥ अप्रमत्तोप्यविश्वासीनरोमूषकयोनिजः ॥ ८ ॥ स्वधर्मस्तुसदाचा
रः सत्क्रियासद्गुणान्वितः ॥ कुटुंबस्यसमुद्धर्तासिंहयोनिभवोनरः ॥ ९ ॥ संग्रामेविजयीयोद्धासकामस्तुबहुप्रजः ॥ वाताधिकोमंदमति
र्नरोमहिषयोनिजः ॥ १० ॥ स्वच्छंदोर्थिरतोग्राहीदीक्षावान्सविष्णुःसदा ॥ आत्मस्तुतिपरोनित्यंव्याघ्रयोनिभवोनरः ॥ ११ ॥ स्वच्छंदः शांतस
द्वृत्तः सत्यवान्स्वजनप्रियः ॥ धर्मिष्ठोदानशूरश्चयोनरोमृगयोनिजः ॥ १२ ॥ चपलोमिष्टभोगीचअर्थलुब्धः कलिप्रियः ॥ सकामःसत्प्रजः शूरो
नरोवानरयोनिजः ॥ १३ ॥ परोपकरणेदक्षोवित्तेश्वरविचक्षणः ॥ मातृपितृप्रियोनित्यंनरोनकुलयोनिजः ॥ १४ ॥ ॥ इतियोनिफलम् ॥ ॥ अथवा
रायुः ॥ ॥ विपदःप्रथमेमासेद्वात्रिंशेचत्रयोदशे ॥ षष्ठेपिचतनःसूर्येजातोजीवतिषष्टकम् ॥ १ ॥ एकादशेऽष्टमेमासेचंद्रेपीडाचषोडशे ॥ सप्तविंश
तिवर्षेचचतुर्युक्ताशितौमृतिः ॥ २ ॥ द्वात्रिंशेचद्वितीयेचवर्षेपीडाचमंगले ॥ चतुःसप्ततिवर्षाणिसदारोगीसजीवति ॥ ३ ॥ बुधवारेष्टमेमासेपी
डावर्षेतथाष्टमे ॥ पूर्णेचतुःषष्टिवर्षेतनोमृत्युर्भविष्यति ॥ ४ ॥ गुरौचसप्तमेमासेषोडशेचत्रयोदशे ॥ पीडाततश्चतुर्युक्ताशीतवर्षाणिजीवति ॥ ५
॥ शुक्रवारेचजातस्यदेहोरोगविवर्जितः ॥ षष्टिवर्षेयसंपूर्णेम्रियतेमानवोध्रुवम् ॥ ६ ॥ शनौचप्रथमेमासेपीड्यतेचत्रयोदशे ॥ दृढदेहस्तदा

जातः शतवर्षाणिजीवति ॥७॥ ॥इतिवारायुः॥ ॥अथलग्नफलम्॥ ॥मेषलग्नेसमुत्पन्नश्चंडोमानीधनीशुभः॥ क्रोधीस्वजनहंताचविक्र
मीपरवत्सलः॥१॥वृषलग्नभवोलोकेगुरुभक्तःप्रियंवदः॥ गुणीकृतीधनीलोभीशूरः सर्वजनप्रियः॥२॥मिथुनोदयसंजातोमानीस्वजन
वल्लभः॥त्यागीभोगीधनीकामीदीर्घसूत्रोरिमर्दकः॥३॥कर्कलग्नेसमुत्पन्नोभोगीधर्मजनप्रियः॥ मिष्टान्नपानसंयुक्तः सौभाग्यःस्रजन
प्रियः॥४॥ सिंहलग्नोदयेजातोभोगीशत्रुविमर्दकः॥ स्वल्पोदरोल्पपुत्रश्चसोत्साहीरणविक्रमः॥५॥ कन्यालग्नेभवेद्बालोनानाशास्त्रविशा
रदः॥ सौभाग्यगुणसंपन्नः सुंदरः सुरतप्रियः॥६॥ तुलालग्नोदयेजातोसुधीःसत्कर्मजीविकः॥विद्वान्सर्वकलाभिज्ञोधनाढ्योजनपूजितः॥
॥७॥ वृश्चिकोदयसंजातःशौर्यवान्धनवान्सुधीः॥ कुलमध्येप्रधानश्चप्राज्ञःसर्वस्यपोषकः॥८॥ धनलग्नोदयेजातोनीतिमान्धर्मवान्स्फ
धीः॥कुलमध्येप्रधानश्चप्राज्ञःसर्वस्यपोपकः॥९॥ मकरोदयसंजातोनीचकर्माबहुप्रजः॥ लुब्धः सुस्थोऽलसोदीनः स्वकार्येषुकृतोद्यमः
॥१०॥ कुंभलग्नेनरोजातोचलचित्तोतिसौहृदः॥ परदाररतोनित्यं मृदुकार्योमहासुरवी॥११॥ मीनलग्नेभवेद्बालोरत्नकांचनपूरितः॥अ
ल्पकामोतिरिक्तश्चदीर्घकालविचिंतकः॥१२॥ ॥इतिजन्मलग्नफलम्॥ ॥अथअंशकफलम्॥ ॥पिशुनश्चपलोदुष्टःपापकर्मानि
राकृतिः॥परेषांव्यसनेरक्तःप्रथमांशेप्रजायते॥१॥उत्पन्नविभवोभोक्तासंग्रामेविगतस्पृहः॥ गांधर्वप्रमदासक्तोद्वितीयांशेप्रजायते॥२॥ ध
र्मिष्टःसंततव्याधिःसर्वसारज्ञएवच॥सर्वज्ञोदेवताभक्तस्तृतीयांशेप्रजायते॥३॥ चतुर्थांशेभिजातस्तुवीक्षितोगुरुभक्तिमान्॥ यत्किंचि

द्दूरणीवस्तुतत्सर्वंलभतेहिसः ॥ ४ ॥ सर्वलक्षणसंपन्नोराजाभवतिविश्रुतः ॥ दीर्घायुर्बहुपुत्रश्चजायतेपंचमांशके ॥ ५ ॥ स्त्रीनिर्जितःभुं
भैर्हीनोबहुमानीनपुंसकः ॥ अर्थध्वंसीप्रमाथीचषष्ठांशेजायतेनरः ॥ ६ ॥ विक्रांतोमतिमान्शूरःसंग्रामेष्वपराजितः ॥ महोत्साहीचसंतोषी
जायतेसप्तमांशके ॥ ७ ॥ कृतघ्नोमत्सरीक्रूरःक्लेशभाषीबहुप्रियः ॥ फलकालेपरित्यागीजायतेचाष्टमांशके ॥ ८ ॥ क्रियासुकुशलोदक्षः
सुप्रतापीजितेंद्रियः ॥ भृत्यैश्चवेष्टितोनित्यंजायतेथनवांशके ॥ ९ ॥ ॥ इतिराशिनवांशकफलम् ॥ ॥ अथाग्रेचंद्रकुंडलिकालिख्यते ॥ ॥
लग्नंदेहोवर्गषड्कोडुकानिप्राणश्चंद्रोधातवोन्येग्रहेंद्राः ॥ प्राणेनष्टेदेहधात्वंगनाशोयस्मात्तस्माच्चंद्रवीर्यप्रधानः ॥ १ ॥ लग्नमात्मामन
श्चंद्रस्तदात्माजीवयोगवान् ॥ लग्नांशाद्द्वादशांकाद्ग्रहाणांफलमादिशेत् ॥ २ ॥ इंदुःसर्वत्रबीजाभोलग्नंचकुसुमप्रभं ॥ फलेनसदृशोंशश्च
भावःस्वादुरसःस्मृतः ॥ ३ ॥ ॥ अथचंद्रराशिफलंलिख्यते ॥ ॥ नेत्रलोलःसदारोगीधर्मार्थकृतनिश्चयः ॥ पृथुजंघःकृतघ्नश्चनिष्पापोराज
पूजितः ॥ १ ॥ कामिनीहृदयानंदोदाताभीतोजलादपि ॥ चंडकर्मामृतश्चांतेमेषराशौभवेन्नरः ॥ २ ॥ भोगीदाताशुचिर्दक्षोमहासत्वोमहाब
लः ॥ रोगीविलासीतेजस्वीसुमित्रश्चवृषेभवेत् ॥ ३ ॥ मृष्टवाक्योलोलदृष्टिर्दयालुर्मैथुनप्रियः ॥ गांधर्ववित्कंठरोगीकीर्तिभागीधनीगुणी ॥ ४ ॥
गौरोदीर्घःपटुर्वक्तामेधावीचदृढव्रतः ॥ समर्थोन्यायवादीचजायतेमिथुनेनरः ॥ ५ ॥ कार्यकारीधनीशूरोधर्मिष्ठोगुरुवत्सलः ॥ शिरोरोगीमहा
बुद्धिःकृशांगःकृत्यवित्तमः ॥ ६ ॥ प्रवासशीलःकोपांधोऽबलोदुःखीसुमित्रकः ॥ अनासक्तोगृहेवक्रःकर्कराशौभवेन्नरः ॥ ७ ॥ क्षमायुक्तः

क्रियाशक्तोमद्यमांसरतःसदा ॥ देशभ्रमणशीलश्चशीतभीतःसुमित्रकः ॥८॥ विनयीशीघ्रकोपीचजननीपितृवल्लभः ॥ व्यसनीप्रकटोलो
केसिंहगशौभवेन्नरः ॥९॥ विलासीसुजनाल्हादीसुभगोधर्मपूजितः ॥ दातादक्षःकविर्वृद्धोवेदमार्गपरायणः ॥१०॥ सर्वलोकप्रियोनाढ्य·
गांधर्वव्यसनेरतः ॥ प्रवासशीलःस्त्रीदुःखीकन्याजातोभवेन्नरः ॥११॥ अस्थानरोषणोदुःखीमृदुभाषीकृपान्वितः ॥ चलाक्षश्चलललक्ष्मी
कोगृहमध्येतिविक्रमः ॥१२॥ वाणिज्यदक्षोदेवानांपूजकोमित्रवत्सलः ॥ प्रवासीसुहृदामिष्टस्तुलाजातोभवेन्नरः ॥१३॥ बालप्रवासीक्रूरा
त्माशूरःपिंगललोचनः ॥ परदाररतोमानीनिष्ठुरःस्वजनेभवेत् ॥१४॥ साहसमासलक्ष्मीकोजन्यामपिसुदुष्टधीः ॥ धूर्तश्चोरफलारंभीवृ
श्चिकेजायतेनरः ॥१५॥ शूरःसत्याधियायुक्तःसात्विकोजननंदनः ॥ शिल्पविज्ञानसंपन्नोधनाढ्योदिव्यभार्यकः ॥१६॥ मानीचरित्रसंपन्नो
ललिताक्षरभाषकः ॥ तेजस्वीस्थूलदेहश्चधनुर्जातःकुलांतकः ॥१७॥ कुजनस्थोवशःस्त्रीणांपंडितःपारदारिकः ॥ गीतज्ञोललितग्राह्योपु
त्राढ्योमातृवत्सलः ॥१८॥ धनीत्यागीसुभृत्यश्चदयालुर्बहुबांधवः ॥ परचिंतितसौख्यश्चमकरेजायतेनरः ॥१९॥ दातालसःकृतज्ञश्चगज
वाजिधनेश्वरः ॥ शुभदृष्टिःसदासौम्योधनविद्याकृतोद्यमः ॥२०॥ पुण्याढ्यःस्नेहकीर्तिश्चधनभोगीसशक्तिकः ॥ शालूरकुक्षिनिर्भीतःकुं
भेजातोभवेन्नरः ॥२१॥ गंभीरचेष्टितःशूरःपटुवाक्योनरोत्तमः ॥ कोपनःकृपणोज्ञानीगुणश्रेष्ठःकुलप्रियः ॥२२॥ नित्यसेवीशीघ्रगामीगं
धर्वकुशलःशुभः ॥ मीनराशौसमुत्पन्नोजायतेबंधुवत्सलः ॥२३॥ ॥इतिराशिफलम् ॥ ॥अथाग्रेराशिभावाध्यायप्रकारोलिख्य

ते॥ ॥चंद्रात्प्रथमगोभानुर्जन्मकालेयदाभवेत् ॥ विदेशगामीभोगीचकलहेकृतवासनः ॥१॥ जन्मकालेयदाभानुर्द्वितीयोयदिचंद्रतः
॥ बहुभृत्ययशाश्चैवराजमान्योभवेन्नरः ॥२॥ चंद्राद्भानुस्तृतीयश्चजन्मकालेयदाभवेत् ॥ स्वर्णार्थीशोशुचिश्चैवराजतुल्योभवेन्नरः॥३
॥ चंद्राच्चतुर्थगोभानुर्जन्मकालेयदाभवेत् ॥ गणकाःकथयंत्येवमातृहस्तेनभक्तिमान् ॥४॥ चंद्रात्पंचमगोभानुर्जन्मकालेयदाभवेत् ॥
कृताभिश्वासुखीचैवबहुपुत्रीभविष्यति ॥५॥ चंद्रात्षष्ठगतोभानुर्जन्मकालेयदाभवेत् ॥ शत्रूणांविजयीशूरःक्षत्रकर्मरतःसदा ॥६॥
जन्मकालेयदाभानुश्चंद्रात्सप्तमगोभवेत् ॥ सुस्त्रीसुशीलचारीचपतिव्रतामहातपी ॥७॥ चंद्रादष्टमगोभानुर्जन्मकालेयदाभवेत् ॥
सर्वदाक्लेशकारीचअतिरोगात्प्रपीडितः ॥८॥ चंद्रान्नवमगोभानुर्जन्मकालेयदाभवेत् ॥ अधर्मःसत्यवादीचबंधक्लेशीसदाभवेत् ॥९॥ चं
द्रात्प्रथमगोभानुर्जन्मकालेयदाभवेत् ॥ तस्यद्वारेषुतिष्ठंतिधनवंतोनसंशयः ॥१०॥ चंद्रादेकादशेभानुर्जन्मकालेयदाभवेत् ॥ राज
गर्व्वीतिवेत्ताचप्रसिद्धःकुलनायकः ॥११॥ चंद्राद्द्वादशगोभानुर्जन्मकालेयदाभवेत् ॥ लग्नद्वादशगेअंधेचंद्रात्कारणमुच्यते ॥१२॥ ॥
इतिबृहज्जातकेद्वितीयप्रकरणेसूर्याध्यायभावः॥ ॥अथभौमभावाध्यायोलिख्यते॥ ॥चंद्रात्प्रथमगोभौमोजन्मकाले
यदाभवेत् ॥ रक्ताक्षीरुधिरस्रावीरक्तवर्णोभवेन्नरः ॥१॥ चंद्राद्द्वितीयगोभौमोजन्मकालेयदाभवेत् ॥ धराधीशोभवेत्पुत्रःकृषिक
र्त्तानसंशयः ॥२॥ चंद्रात्तृतीयगोभौमोजन्मकालेयदाभवेत् ॥ चतुर्भ्रातृसमायुक्तःसुशीलःसर्वदासुखी ॥३॥ चंद्राच्चतुर्थगोभौमोज

मा॰सा॰ न्मकालेयदाभवेत् ॥ स्करवभंगीदरिद्रीस्यात्पुंसःस्त्रीम्रियतेध्रुवं ॥४॥ चंद्रात्पंचमगोभौमोजन्मकालेयदाभवेत् ॥ पुत्रहीनोनरःस्त्रीणां पद्ध॰
१३ लग्नेपततिनिश्चितम् ॥५॥ चंद्राच्चषष्ठगोभौमोजन्मकालेयदाभवेत् ॥ अधर्मेशत्रुताचैवरोगेणापीडितःसदा ॥६॥ चंद्रात्सप्तमगोभौ
मोजन्मकालेयदाभवेत् ॥ स्त्रीकुशीलाभवेत्तस्यसदाचप्रियवादिनी ॥७॥ चंद्रादष्टमगोभौमोजन्मकालेयदाभवेत् ॥ जीवहंतामहा
पापीशीलसत्यविवर्जितः ॥८॥ चंद्रान्नवमगोभौमोजन्मकालेयदाभवेत् ॥ लक्ष्मीवांश्चभवेत्सुभोवृद्धकालेनसंशयः ॥९॥ चंद्राद्द
शमगोभौमोजन्मकालेयदाभवेत् ॥ तस्यद्वारेषुतिष्ठंतिगजवाजीनसंशयः ॥१०॥ चंद्रादेकादशेभौमोजन्मकालेयदाभवेत् ॥ राजद्वारेप्रसि
द्धःस्यात्यशोरूपसमन्वितः ॥११॥ चंद्राद्द्वादशगोभौमोजन्मकालेयदाभवेत् ॥ मातुश्चासुरवकारीचसदाकष्टस्यदायकः ॥१२॥ ॥ इतिबृह
ज्जातकेद्वितीयप्रकरणेभौमाध्यायः ॥ ॥ चंद्रात्प्रथमगःसौम्यःसुरवरूपंविनानरः ॥ दुष्टभाषीमतिभ्रंशीस्थानभ्रष्टोदिनेदिने ॥१॥ चंद्राद्द्विती
यगःसौम्योधनधान्यसमाकुलः ॥ गृहबंधुधनप्राप्तिःशीतरोगैर्विनश्यति ॥२॥ चंद्रात्सहजगःसौम्यःकुरुतेचार्थसंपदः ॥ राज्यलाभोभवेत्तस्य
महतांसंगमोध्रुवं ॥३॥ चंद्राच्चतुर्थगःसौम्यःसर्वदासुरवकारकः ॥ मातृपक्षेमहालाभंस्करवंजीवतिमानवः ॥४॥ चंद्रात्पंचमगःसौम्योबुद्धिमां-
श्चविचक्षणः ॥ रूपवांश्चमहाकामीकुवाक्यंधारयेन्नरः ॥५॥ चंद्रात्षष्ठगतःसौम्यःकृपणःकातरोभवेत् ॥ विवादेचमहाभीरुःरोमशोदीर्घलो १३
चनः ॥६॥ चंद्रात्सप्तमगःसौम्यःस्त्रीणांचवशगोनरः ॥ कृपणश्चधनाढ्यश्चबद्धायुश्चभविष्यति ॥७॥ चंद्रादष्टमगेसौम्येदेहेशीतोभविष्यति

राजमध्येप्रसिद्धश्चशत्रूणांचभयंकरः ॥८॥ चंद्राच्चनवमःसौम्यःस्वधर्मस्यविरोधकः ॥अन्यधर्मरतःपुंसोविरोधीदारुणोभवेत् ॥९॥ चंद्रा
द्दशमगःसौम्योराजयोगीनरःसदा ॥ राशिकर्मयदाचंद्रःकुटुंबेनायकोभवेत् ॥१०॥ चंद्रादेकादशेसौम्योलाभकारीपदेपदे ॥ वर्षएकादशेपुंसः
पाणिग्राहोभविष्यति ॥११॥ चंद्राद्द्वादशगःसौम्यःसर्वदाकृपणोभवेत् ॥ तत्कृतस्यजयोनास्तिपराजयंलभेद्दिने ॥१२॥ ॥इतिबृहज्जातकेद्वि
तीयप्रकरणेबुधफलम् ॥ ॥चंद्रात्प्रथमगोजीवोजीवयोग्योभवेन्नरः ॥ व्याधिनारहितःशूरोनिर्धनोनकदाचन ॥१॥ चंद्रात्तुद्वितीयगोजीवो
राजमान्यःशतायुषी ॥ अत्युग्रश्चप्रतापीचधर्मिष्ठःपापवर्जितः ॥२॥ चंद्रात्तृतीयगेजीवेनारीणांवल्लभोभवेत् ॥ धनवृद्धिःपितुर्गेहेवर्षेसप्तदशे
तथा ॥३॥ चंद्राच्चतुर्थगोजीवःसुखैश्चैवविवर्जितः ॥ मातृपक्षेमहाकष्टीपरेषांगृहकर्मकृत् ॥४॥ चंद्रात्पंचमगोजीवोदिव्यदृष्टिर्भवेन्नरः ॥ ते
जस्वीनोनरोनारीह्यत्युग्रश्चमहाधनी ॥५॥ चंद्राच्चषष्ठगोजीवोउदासीग्रहवर्जितः ॥ मायुवाह्यंभवेत्पुंसांभिक्षाभोक्ताव्ययार्दितः ॥६॥ चंद्रा
त्सप्तमगोजीवोबहुजीवीव्ययंविना ॥ स्थूलदेहीक्लीबपांडुर्गृहमध्येचनायकः ॥७॥ चंद्रादष्टमगोजीवोदेहरोगीसदानरः ॥ सुतातोपिमहाक्लेशी
सुखंस्वप्नेनदृश्यते ॥८॥ चंद्रान्नवमगोजीवोधर्मिष्ठोधनपूरितः ॥ सुमार्गेसुगतश्चैवदेवगुर्वोश्चसेवकः ॥९॥ चंद्राद्दशमगोजीवोजन्मकालेय
दाभवेत् ॥ पुत्रदारपरित्यागीतापसीचभवेन्नरः ॥१०॥ चंद्रादेकादशेजीवोजन्मकालेयदाभवेत् ॥ अश्वारूढोभवेत्पुत्रोराजतुल्योभवेन्नरः
॥११॥ चंद्राद्द्वादशगोजीवोजन्मकालेयदाभवेत् ॥ स्यात्कुटुंबविरोधीचसुखंशत्रोर्दशाग्रहे ॥१२॥ ॥इतिबृहज्जातकेद्वितीयप्रकरणेगु

मा॰सा॰ रुफलम्॥ ॥चंद्रात्तुप्रथमः शुक्रोजन्म॰॥ जलेमृत्युर्भवेत्तस्यसान्निपातंहिहिंस्त्रसा॥१॥ चंद्राद्द्वितीयगः शुक्रोजन्म॰॥ महाधनीतथाराज पद्ह॰
१४ तुल्योभाविनसंशयः॥२॥ चंद्रात्सहजगेशुक्रेजन्म॰॥ धर्मिष्ठोबुद्धिवांश्चैवम्लेंछतोलाभदायकः॥३॥ चंद्राच्चतुर्थगेशुक्रेजन्म॰॥ कफाधिको
महाक्षामोवार्द्धक्येधनवर्जितः॥४॥ चंद्रात्पंचमतःशुक्रोजन्म॰॥ बहुकन्याभविष्यंतिधनाढ्योयशवर्जितः॥५॥ चंद्राच्चषष्ठगः शुक्रोजन्म॰॥
दुर्व्ययाद्व्ययकारीचसंग्रामेचपराजितः॥६॥ चंद्रात्सप्तमगः शुक्रोजन्म॰॥ पुरुषार्थहीनकारीचशंकितश्चपदेपदे॥७॥ चंद्रादष्टमगोशुक्रोज-
न्म॰॥ प्रसिद्धोहिमहायोद्धादाताभोक्तामहाधनी॥८॥ चंद्रान्नवमगःशुक्रोजन्म॰॥ बहुभ्रातातथामित्रोभगिनीबहुलोभवेत्॥९॥ चंद्राच्चदश
मेशुक्रोजन्म॰॥ मातापित्रोःसुखप्राप्तिर्जीवितेतुबृहद्भवेत्॥१०॥ चंद्रादेकादशेशुक्रोजन्म॰॥ बहुश्चायुर्भवेत्पुंसोरिपुरोगविवर्जितः॥११॥ चंद्रा
द्द्वादशगः शुक्रोजन्म॰॥ परदाररतोनित्यंलंपटोज्ञानहीनतः॥१२॥ ॥इतिबृहज्जातकेद्वितीयप्रकरणेशुक्रफलम्॥ ॥चंद्राच्चप्रथमेसौरीज
न्म॰॥ प्राणनाशोर्थनाशश्चबंधुनाशस्तथापरे॥१॥ चंद्राद्द्वितीयगोमंदः जन्म॰॥ मातुश्चकष्टकारीचअजाक्षीरेणजीवति॥२॥ चंद्रात्सहज
गःशौरीजन्मकाले॰॥ बहुकन्याभवेत्पुंसउत्पद्यम्रियतेध्रुवम्॥३॥ चंद्राच्चतुर्थगोनूनंशनिर्जन्मनिसंभवेत्॥ महापौरुषकारीचशत्रुहंतानसं
शयः॥४॥ चंद्रात्पंचमगःशौरिर्जन्म॰॥ स्त्रीस्यात्श्यामलवर्णाचअथवाप्रियवादिनी॥५॥ रविजःषष्ठगश्चंद्राज्जन्म॰॥ महाक्लेशीचकष्टीचआयुर्ही १४
नोभवेन्नरः॥६॥ चंद्राच्चसप्तमेस्थानेयदाचरविनंदनः॥ महाधर्मीचदाताचस्त्रीणांबहुकरग्रहः॥७॥ रविजोअष्टमेस्थानेचंद्रतोजन्मसंभवः॥

पितुश्चकष्टकारीचबहुदानेशुभंभवेत् ॥८॥ चंद्रान्नवमगः सौरिर्जन्म०॥ यदामुग्धदशाप्राप्तिर्धनहानिर्भविष्यति॥९॥ चंद्राद्दशमगः सौरिर्ज
न्म०॥ नृपतुल्योभवेद्देहीकृपणोधनपूजितः॥१०॥ चंद्रादेकादशेसौरिर्जन्मल०॥देहक्लेशीमहाकष्टीअधर्मीचनसंशयः॥११॥ द्वादशेभुवनेसौ
रिश्चंद्राच्चपततेयदि॥ निर्धनीभिक्षुकश्चैवधर्मेणैवविवर्जितः॥१२॥ ॥इतिबृहज्जातकेद्वितीयप्रकरणेशनिराशिभावः॥ ॥जन्मकर्मेशुभे
धर्मेचंद्राद्यदिपतेत्तमः॥ जन्मकालेभूपतिश्चवृद्धकालेमहाधनी ॥१॥ षष्ठेचद्वादशेराहुश्चंद्राच्चपतितोयदि॥ सराजाराजमंत्रीचधनीधा
न्यसमाकुलः॥२॥ चतुर्थेसप्तमेराहुश्चंद्राच्चयदिजायते॥ मातापितामहीकष्टीसदाह्यसुखदायकः॥३॥ धनेएकादशेस्थानेचंद्राद्राहुःप्रजा
यते॥ धनमानवसंयुक्तः स्फरवंस्वप्नेनदृश्यते॥४॥ पंचमेचयदाराहुश्चंद्राज्जलजसंभवं॥ निधनंचापिसिद्धंचआपदश्चपदेपदे॥५॥ ॥इ
तिबृहज्जातकेप्रकीर्णेराहुफलम् ॥ ॥अथराश्यायुः॥ ॥अश्विनीभरणीकृत्तिकापादेमेषराशिः भौमक्षेत्रेजन्मनावपायाफल॥ प्रथमे
राजवंत १ धनवंत २ विद्यावंत ३ देवगुरुभक्त ४ पंचमेचोर ५ काळभाषहीण ६ सप्तमेयोगींद्र ७ निर्धन ८ शुभलक्षण ९ मास १ कष्टअल्पमृत्युः
वर्ष १ वर्ष १३ जलघातवर्ष १८ घातवर्ष ६४ अंगरोगवर्ष ५० चोरलोहडाउपघातयदाशुभग्रहोनिरीक्षितेतदाजीवतिवर्ष ७५ मास २ घटी १५ पलें
१५ मृत्युः कार्तिकमासेतिथिचौथवार मंगलभरणीनक्षत्रेदेहंत्यजति॥१॥ इतिमेषराशिफलं॥ कृत्तिकाणांत्रयःपादारोहिणीमृगशिरोर्द्धवृ
षराशिः शुक्रक्षेत्रेजन्मतइनवपायाज्जूजूफल ॥ प्रथमेयशवंत १ सुतवंत २ रणवंशा ३ शुभलक्षण ४ विद्यावंत ५ सौभाग्यवंत ६ कुलमंडण ७

धनधान्यसमर्थ ८ परदारचोर ९ वर्ष ३ षष्ठ ६।८।३३।४६।५२।६३ अग्निलोहसांडसर्प्पकष्टदेवदोषघाताएतेअल्पमृत्यवः यदाव्यतिक्रामति त
दावर्ष ८५ मास ६ दिन ७ माघमासे शुक्लपक्षेतिथौ ९ शुक्रदिनेरोहिणीनक्षत्रे अर्धरात्रौदेहंत्यजति ॥२॥ इतिवृषराशिफलम् ॥ ॥मृगशिरो
र्द्धआर्द्रापुनर्वसुपादत्रयंमिथुनराशिः ॥बुधक्षेत्रेजन्मतोनवपायाफलं॥ ॥प्रथमेभाग्यवंत १ निर्धन २ कुत्सितभाषी ३ धनेश्वर ४ भाग्यवंत
५ धनधान्यभोगी ६ चोर ७ महात्मसिद्ध ८ देवगुरुमाननीक ९ मास ६ वर्ष ६ अंगरोगवर्ष १० चक्षुःपीडा ११ वर्ष १८ घातवर्ष २४।५३।६३
अल्पमृत्युःयदाशुभग्रहनिरीक्षितोभवति तदाजीवतिवर्ष ८५ पौषमासेकृष्णपक्षे अष्टमीदिने बुधवारे आर्द्रानक्षत्रे प्रथमप्रहरे देहंत्यजति
॥ ॥इतिमिथुनराशिफलम् ॥ ॥पुनर्वसुपादैकंपुष्यआश्लेषांतंकर्कराशिः चंद्रक्षेत्रं प्रथमेधनवंत १ महीपतिः २ स्वांगमुनीश्वर ३ वि
द्यावंत ४ धर्मवंत ५ चोर ६ निर्धन ७ देशपति ८ कुलमंडण ९ अल्पमृत्युदिन ११ कष्टमास ९ वर्ष १ रोगवर्ष ७ जलघातवर्ष ९ अंगरोगवर्ष
१२ जलघातवर्ष १६ अंगरोगवर्ष २० लोहघातवर्ष २७।३५ अल्पदोषवर्ष ४५ देवदोषवर्ष ५५।६१ अल्पमृत्युराजकष्टअसाध्यरोगअग्निसर्प्प
जलघातसांडवाघघातशुभग्रहनिरीक्षितस्तदावर्ष ७० मास ५ दिन ३ फाल्गुनमासेशुक्लपक्षे ४ प्रहरे गोधूलिकवेलायांदेहंत्यजति ॥४॥ ॥
इतिकर्कराशिफलं॥ ॥मघाचपूर्वाफाल्गुनीउत्तराफाल्गुनीपादसिंहराशिः सूर्यक्षेत्रे प्रथमेराजमान्य १ धनेश्वर २ तीर्थवासी ३ पुत्रवं
त ४ स्वपक्षहीन ५ मातापितातारक ६ राजमान्य ७ धनधान्यसमर्थ ८ निर्धन ९ चोरीमास ८ तथावर्ष १ कष्टवर्ष १०।१५ अंगरोगवर्ष २५

वर्ष ४५ देवदोषसन्निपातवर्ष ५१ वर्ष ६१ घातअल्पमृत्युयदाव्यतिक्रमतितदाजीवतिवर्ष ६५ श्रावणमासेशुक्लपक्षे १० दिनेपूर्वाफाल्गुनी
नक्षत्रेरविवारे प्रथमप्रहरेदेहंत्यजति ॥ ॥इतिसिंहराशिफलम्॥ ॥उत्तराणांत्रयःपादाहस्तचित्रार्द्धकन्याराशिः बुधक्षेत्रेजन्मप्रथ
मेनिर्द्धन १ पुत्रहीन २ शत्रुमरणा ३ धनयान ४ भोगी ५ पुत्रवंत ६ राजमान्य ७ सर्वसमर्थ ७ पराक्रमी ८ मातापितागुरुभक्त ९ मास १३ व
र्ष ३ अंगरोगवर्ष १ वर्ष १३ चक्षुःपीडाजलघातवर्ष २६ अंगरोगदेवपीडावर्ष ३३ लोहघातवर्ष ४३ अंगरोगएतानिएनानिअल्पमृत्युर्यदा
शुभग्रहनिरीक्षितोभवतितदाजीवतिवर्ष ८४ भाद्रपदमासेशुक्लपक्षे ९ दिनेबुधवारे हस्तनक्षत्रेगोधूलिकवेलायांदेहंत्यजति ॥ ॥इतिक
न्याफलं॥ ॥चित्रार्द्धस्वातीविशाखापादत्रयंतुलाराशिः शुक्रक्षेत्रेजन्म ९ फलं॥ प्रथमेधनभोगी १ धनेश्वर २ निर्धन ३ भाषाहीन ४ जा
तकर्मा ५ परदाराचोर ६ मातापितातारक ७ राजमान्य ८ भाग्यवंत ९ मास ४ कष्टमास १६ अंगरोगवर्ष ४ कष्टवर्ष १६ जलघातवर्ष २१ । ३३
अंगरोग ४१ अंगवृद्धिवर्ष ५१ देवदोषवर्ष ६१ अल्पमृत्युर्यदाशुभग्रहनिरीक्षितोभवतितदाजीवतिवर्ष ८५ वैशाखमासेशुक्लपक्षेतिथि १३
शुक्रवारेशतभिषानक्षत्रेमध्यान्हवेलायांदेहंत्यजति॥ ॥इतितुलाफलं॥ ॥ विशाखापादमेकंअनुराधाज्येष्ठांतंवृश्चिकराशिः ॥भौ
मक्षेत्रेप्रथमेधनेश्वर १ यशवंत २ आगमवंत ३ महांतिक ४ भाषाहीन ४ कुलमंडन ५ धनधान्यसमर्थ ६ विद्यावंत ७ राजमान्य ८ य
शवंत ९ मास २ कष्टवर्ष ३ कष्टवर्ष ७ अंगरोगवर्ष ८ जलघातवर्ष १३ वृक्षघातवर्ष ३२ । ३५ अंगरोगलोहघातवर्ष ४५ अंगरोगवर्ष ६३

अल्पमृत्युर्यदाशुभग्रहनिरीक्षितस्तदाजीवतिवर्ष ७५ मास २ दिन ७ ज्येष्ठमासेकृष्णपक्षेतिथौ ११ मंगलवारे अनुराधानक्षत्रे प्रथ
मप्रहरेदेहंत्यजति॥ ॥इतिवृश्चिकफलं॥ ॥मूलंचपूर्वाषाढाउत्तराषाढापादेधनराशिः॥ गुरुक्षेत्रे प्रथमेज्ञानवंत १ निर्धन २ नी
चकर्मकारक ३ राजमान्य ४ क्रोधी ५ पुत्रवंत ६ कामलंपट ७ धनेश्वर ८ रुधिरविकारी ९ मास ५ वर्ष ३ कष्टवर्ष ९ अंगरोगवर्ष ११ च
क्षुःपीडावर्ष १६ जलघातवर्ष २४ वर्ष ३६ अंगरोगवर्ष ४७।५७।६७ तठईसर्पजलघात अल्पमृत्युःयदाशुभग्रहनिरीक्षितस्तदाजीवतिवर्ष
८५ आषाढमासेशुक्लपक्षेतिथि १ गुरुवारेहस्तनक्षत्रेगोधूलिवेलायांदेहंत्यजति॥ ॥इतिधनुराशिफलं॥ ॥उत्तराणांत्रयःपादाश्रवणध
निष्ठार्द्धमकरराशिः॥शनिक्षेत्रेप्रथमे अंगहीन १ गुरुभक्त २ परदाररत ३ शुभलक्षण ४ देवांसि ५ पुत्रवंत ६ उत्तम ७ महापति ८ दोऊपक्ष
तारक ९ धनेश्वर ९ मास ३ कष्टमास १ देवदोषपीडावर्ष ३ अंगरोगवर्ष ५७ देवदोषवर्ष १० अंगरोगअग्निपीडावर्ष ३२ लोहघातवर्ष ३३
कष्टवर्ष ४३ तथा ५१ अल्पमृत्युर्यदाशुभग्रहनिरीक्षितोभवतितदाजीवतिवर्ष ६१ कार्तिकेमासेदेवदोषअनंत अल्पमृत्युर्यस्यव्यतिक्रमति
तदाजीवतिवर्ष ८१ शुक्लपक्षेतिथि ५ शुक्रवारेश्रवणनक्षत्रेदेहंत्यजति॥ ॥इतिमकरफलं॥ ॥धनिष्ठार्द्धशततारकापूर्वाभाद्रपदात्रयःकुं
भराशिः॥ प्रथमेमध्यम १ श्रीमंत २ कष्टभाषाहीन ३ पुत्रवंत ४ राजमान्य ५ बाबकाबहीन ६ योगींद्र ७ अंगहीन ८ शुभलक्षण ९ दिन ३ क
ष्टतथादिन ७ अल्पमृत्यु १८ वर्षे ३२ शुभग्रहनिरीक्षितोभवति तदाजीवतिवर्ष ६१ माघमासेशुक्लपक्षेतिथि २ गुरुवारेउत्तराभाद्रपदानक्षत्रे

मृत्युर्भवति॥ ॥इतिकुंभफलं॥ ॥पूर्वाभाद्रपदपादमेकंउत्तराभाद्रपदरेवत्यंतंमीनराशिः॥जीवक्षेत्रेप्रथमेधनवंत १ कालहीन २ लंप
ट ३ धनवंत ४ चोर ५ कपटी ६ निर्धन ७ भाग्यवंत ८ नवमेआपक्लेश ९ वर्ष १८।३३ शुभग्रहनिरीक्षितस्तदाजीवतिवर्ष ६१ माघमासशु
क्लपक्षतिथि १२ उत्तराभाद्रपदनक्षत्रगुरुवारेप्रातःकालेदेहंत्यजति॥ ॥इतिमीनफलं॥ ॥दिक् १० काल ६ नरव २० बाणे ५ भ ८ द्द
क् २ नरवाः २० समयो ६ दिशः १० ॥ मनवो १४ राम ३ वेदा ४ श्च मेषाद्यष्टोत्तरंशतं ॥१॥ जन्मपत्र्यांयत्रस्थानेग्रहोभवतितत्रतेषांलग्नानां
ध्रुवांकाःसंमील्यतदेवायुर्ज्ञेयं॥ ॥इतिलग्नायुः॥ ॥अथभावसाधनार्थंसूर्यादिकमध्यमस्पष्टकरणं॥ ॥यथोक्तं॥ ॥
स्पष्टैर्ग्रहैर्विनाकिंचित्निगदंतिकुबुद्धयः॥ दशांतर्दशादीनांफलंयात्युपहास्यताम्॥१॥ तत्रप्रथमंअयनांशकरणम्॥ वेदवेदखवन्हि
भि ३०४४ युतेविक्रमवत्सरे॥ अयनवल्लीभवेत्तगतकलिस्तथैवच॥२॥ गतकलिद्वादशगुणितंचैत्राद्यातमाससंयुक्तं॥ खखशरा
द्रि ७५०० विभाजितंलब्धंराशिशेषंत्रिंशद्गुणितं ३० गतदिनयुतंतेनैवभागलब्धंअंशशेषषष्टि ६० गुणंतेनैवभागलब्धंकलाशेषष
ष्टि ६० गुणंतेनैवभागलब्धंविकलाइतिअयनमध्यमंजातम्॥ अयनमध्यमंस्थाप्यरात्रियान्विकल्प्यंचिंतनीयम्॥ ॥इतिकोर्थः॥
॥षडधिकंकेंद्रंविशोधयेत्षड्भिः षड्धिकनूनषड्भिइतिकृत्वापश्चाद्रात्रिंस्थाप्यत्रिंशद्गुणिताअंशास्तत्रनियोजयेत्॥ ॥इतिप्रकारेणक्रां
तिफलज्यो॰ परिपलआनयनम्॥ इतिस्पष्टायनांशानयनम्॥ ॥अथदिनमानमिश्रानयनप्रकारः॥ ॥स्पष्टार्कोयनभागयुक्तभुज

वद्भुक्तकर्क्षनस्तचरंधृलाभोग्यचरमवाहुलवतः खाग्न्यु ३० इतैस्त्रैर्युतः॥ मेषात्खंशरवारिधी ४५ घ्नणमथोकुर्याचुलादौस्फुटम् तन्मिश्रंहि
गुणंद्युमानमुदितंरात्रेस्तुषष्ठ्युत्तरम्॥१॥ ॥अथटीका॥ ॥स्पष्टसूर्यमांहिअयनांशजोडीभुजनीअंशकलाजेवैखंडीविचारिजेराशि
स्थानशून्यहोईतोप्रथम षंडी॥१॥उबरैतोदूजीषंडी २ ऊबरैतोतीजीषंडी ३ लागईस्वस्वदेशकीचरषंडीआवईतीणसुंभुजकीअंशकलागु
णीजैकलानई॥६०॥भागलब्धंऊर्ध्वयुतंऊर्ध्वभाग ३ लब्धंगतषंडीमांहीजोडीजईतेफलकहीजैपनैमेषादिक ६ राशिहोईतो ४५ दंडमांहि
जोडिजैतुलादिकराशिहोईतो ४५ मांहिहिनकीजैमिश्रप्रमाणहोई॥खवन्हि ३० संत्यजतिमिश्रमध्येशेषंद्विनिघ्नंदिनमानकंचततू॥षष्टी ६०
मध्येचविशोधनीयंनैशंप्रमाणंकथितंमुनींद्रैः॥१॥ मिश्रमांहि ३० दूरीकरीशेष दूणोकरीजईदिनप्रमाणहोईसाठि ६० मांहिथीदिनमा
नघटाईजईरात्रिप्रमाणकोई॥ ॥अथअयनांशकरणम्॥ ॥अथशराब्धियुगैः ४४५ रहितःशकोव्यपहृतःस्वरसैरयनांश-
काः॥मधुसितादिकमासगतंप्रतिशरपलैःसहितंकुरुसर्वदा॥१॥ ॥अथदिनमानानयनम्॥ ॥अयनादिकंवासररामहतागग
नानलबाणशशांकयुताः॥परभाजितशून्यरसैर्घटिकामकरादिदिनम् कर्कादिनिशा॥१॥ जोदिनप्रमाणआवइतिणमांहिरात्र्यर्धजो
डीजेईमिश्रप्रमाणहोई॥ ॥अथतात्कालिकग्रहानयनम्॥ ॥मिश्रेष्टांतरगुणितायुक्तेर्दिवसेनिशादलेप्रथमे॥ रात्र्यर्धभीष्टांत १७
रहतापरेत्वष्टमिश्रयोगेन॥१॥ ॥अस्यटीका॥ ॥ग्रहंस्पष्टंकर्मभूमौस्थाप्यपश्चात् मिश्रैर्मिश्रादिनमानप्रमाणघटीअंतरकी

टेमकरेमेषेतुलायांचगृहेस्थिते ॥ चतुःसागरयोगःस्यात्सर्वारिष्ट निषूदनः ॥ १ ॥ चतुःसंधौनरोजातोबहुरत्नसमन्वितः ॥ गजवाजिधनैःपूर्णोधरणी
शोभवेन्नरः ॥ १८ ॥ ॥ इतिचतुःसागरयोगः ॥ ॥ चतुर्थेष्वपिकेंद्रेषुक्रूराःसौम्यायदाग्रहाः ॥ क्रूरैःपृथ्वीपतिर्विद्यात्सौम्यैर्लक्ष्मीपतिर्भवेत् ॥ १ ॥ मृग
पतिअजलग्नेभानुकेंद्रेत्रिकोणेव्ययनिधनसुसंस्थे ८ चंद्रकर्केवृषेभाः ॥ उभययदिचदृस्थाजीवशुक्रोथवास्याद्भवतिअमरयोगेसर्वरिष्टोविनाशः
॥ १२ ॥ ॥ इतिअमरयोगः ॥ ॥ शुक्रेघटे ११ कुजेमेषेसुस्थोदेवपुरोहितः ॥ तदाराजाभवेन्नूनंचापःसौध्यतिदिङ्नुरवः ॥ १३ ॥ ॥ इतिचापयोगः
॥ ॥ कर्कटेमिथुनेमीनेकन्यायांचापगेग्रहे ॥ दंडयोगःसमाख्यातोराज्ञामास्पदकारकः ॥ १४ ॥ दंडेचजातःपृथुपुण्यभागीएकातपत्रीभवतिक्षि
तीशः ॥ तेजोमयःसिंहपराक्रमश्चसंसेव्यमानोगुरुपात्रवृंदैः ॥ १५ ॥ ॥ अथापरप्रकारेणहंसयोगः ॥ ॥ मेषेघटेचापतुलामृगालीमध्यग्रहेहंस
इतिप्रसिद्धः ॥ सर्वैश्वपूर्णोनृपतेश्चपूज्योहंसोद्भवोराजसमोमनुष्यः ॥ १ ॥ ॥ इतिजातकचंद्रिकायांहंसः ॥ ॥ धनेव्ययेतथालग्नेशेषस्थानेषुसं
स्थिताः ॥ वापीयोगोभवेदेवमुदितःपूर्वसूरिभिः ॥ ५९ ॥ दीर्घायुःस्यादात्मवंशप्रधानःसौख्योपेतोत्यंतधीरोनरोहि ॥ चंचद्वाक्यस्तन्मनःपुण्य
वापीपापीयोगेयःप्रसूतःप्रतापी ॥ ६० ॥ ॥ इतिवापीयोगः ॥ ३६ ॥ लग्नाच्चतुर्थात्स्मरतःखमध्याच्चतुर्ग्रहस्थैर्गगनेंबरेंद्रैः ॥ क्रमेणयूपश्चश
रश्चशक्तिर्दंडःप्रदिष्टःखलुजातकज्ञैः ॥ ६१ ॥ धीरोदारोयज्ञकर्मानुसारोनानाविद्यासद्विचारोनरोच्चः ॥ यस्योत्पत्तौवर्ततेयूपयोगोयोगोलक्ष्म्याजा ५३
यतेतस्यनित्यं ॥ ६२ ॥ इतियूपयोगः ॥ ३७ ॥ हिंस्रोत्यंतंतुल्यदुःखैःप्रतप्तःप्राप्तानंदःकाननांतेशरज्ञः ॥ मर्त्योयोगेयःशरेजातजन्मास्त्रीरंभाख्या

तस्यनकापिसौख्यं ॥६३॥ ॥इतिशरयोगः॥३८॥ ॥नीचैरुच्चैःप्रीतकृत्सालसश्चसौख्यैरर्थैर्वर्जितोदुर्बलश्च ॥ वादेयुद्धेतस्यबुद्धिर्विशालाशाला
सौख्यस्याल्पताशक्तियोगे॥६४॥ ॥इतिशक्तियोगः॥३९॥दीनोहीनोन्मत्तसंजातसौख्यः द्वेष्योद्वेगीगोत्रजैर्जातवेदः॥कांतापुत्रैरर्थपुत्रैर्विहीनोहीनो
बुद्ध्यादंडयोगेतुजन्मा॥६५॥ ॥इतिदंडयोगः॥४०॥लग्नाच्चतुर्थात्स्मरतःखमध्यात्सप्तर्क्षगैर्नौरथकूटसंज्ञः॥ छत्रंधनुश्चापगृहप्रवृत्तानौपूर्वकैर्योगि
इहार्द्धचंद्रः॥६६॥ख्यातोलुब्धोभोगसौख्यैर्विहीनः स्यान्नौयोगेलब्धजन्मामनुष्यः॥ क्लेशीशश्वच्चंचलःस्वांतवृत्तिस्तोयोद्भूतेधनधान्येनतस्य॥६७॥
॥इतिनौयोगः॥४१॥ ॥दुर्गारण्यावासशीलश्चमल्लःभिल्लप्रीतिर्निर्धनोनिंद्यकर्मा॥ धर्माधर्मज्ञानहीनश्चदुष्टःकूटप्राप्तोत्पत्तिरेवंमनुष्यः॥६८॥
॥इतिकूटयोगः॥४२॥प्राज्ञोराज्ञांकार्यकर्त्तादयालुःपूर्वेपश्चात्सर्वसौख्यैरुपेतः॥ यस्योत्पत्तौछत्रयोगोपलब्धिर्लब्धिःस्याच्चेच्छत्रसच्चामराद्यैः॥
॥६९॥ ॥इतिछत्रयोगः॥ ॥श्रीजातकाभरणे॥ ॥आद्येभागेचांतिमेजीवितस्यसौख्योपेतःकनकाद्रिप्रचारः॥ योगेजातःकार्मुकेसोतिदुष्टोग
र्वोन्मत्तोत्पत्तिकृत्कार्मुकाख्यः॥७०॥ ॥इतिकार्मुकयोगः॥४३॥ भूमिपालप्राप्तचंचत्प्रतिष्ठःश्रेष्ठःसेनाभूषणाद्यांबराद्यैः॥ चेदुत्पत्तौयस्ययो
गोर्द्धचंद्रश्चंद्रःसस्याद्दुत्सवार्थंजनानां॥७१॥ ॥इतिअर्द्धचंद्रयोगफलं॥४४॥ततोर्द्धनाड्यैकग्रहांतरेणस्युःस्थानषट्केगगनेचरेंद्राः॥च
क्राभिधानश्चसमुद्रनामायोगाविताहाकृतिजाश्चविंशत्॥७२॥श्रीमद्भूपोयोत्यंतजातप्रतापोभूपोभूपोपायनैरर्चितःस्यात्॥ योगेजातः
पुरुषोयस्तुचक्रेचक्रेपृथ्व्याःशालिनीतस्यकीर्तिः॥७३॥ ॥इतिचक्रयोगः॥४५॥दाताधीरश्चारुशीलोदयालुःपृथ्वीपालप्राप्तसाम्यप्रकामं ॥

योगेजातोयःसमुद्रेसधन्योधन्योवंशस्तेननूनंनरेण॥७४॥ ॥इतिसमुद्रयोगः॥४६॥ ॥येयोगाःकथिताःपुराबहुतरास्तेषामभावेभवेद्गोल
ग्नैकगतिर्युगंद्वियहगैःशूलस्त्रिगेहोपगैः॥ केदारश्चचतुर्षुसर्वखचरैःपाशस्तुपंचस्थितैःषट्संस्थैकदामिनिकाचसप्तगृहगैर्वीणोतिसंख्या-
इमे॥७५॥विद्यासदौदार्यसामर्थ्यहीनाः नानायासाः नित्यजातप्रयासाः॥ एषांयोगःसंभवेद्गोलनामानामासत्यप्रीतयोऽनीतयस्ते॥
॥७६॥ ॥इतिगोलनामायोगः॥४७॥ ॥पाखंडेनाखंडितप्रीतिभाजोनिर्लज्जाःस्युर्धर्मकर्मप्रयुक्ताः॥पुत्रैरर्थैःसर्वथातेवियुक्तायुक्ता
युक्तज्ञानशून्यायुगाख्ये॥७७॥ ॥इतियुगयोगः॥४८॥ युद्धेवादेतत्पराःक्रूरचेष्टाःक्रूराःस्वांतेनिष्ठुरानिर्धनाश्च॥ योगोयेषांसूतिकाले
हिशूलःशूलप्रायास्तेजनानांभवंति॥७८॥ इतिशूलयोगः॥४९॥ चापोपेताश्चार्यवंतोविनीताःकृशौत्सौख्याश्चोपकारादराश्च॥ योगे
केदारेस्थेनरास्तेमधीराश्चाराश्चापीरतेषांविशेषात्॥७९॥ ॥इतिकेदारयोगः॥५०॥दीनाकारास्तत्पराश्चापकारेबंधेनार्त्ताभूरिजल्पाःसदं
भाः॥ नानानर्थापाशयोगप्रजाताःजातारण्यप्रीतयस्युर्मनुष्याः॥८०॥ ॥इतिपाशयोगः॥५१॥जातानंदोनंदनाढ्यैःसुधीरोविद्वान्
भूपःकोपसंजाततोषः॥ चंचत्शीलौदार्यबुद्धिःप्रशस्तःशस्तःसूतौदामिनीयस्ययोगः॥८१॥ ॥इतिदामिनीयोगः॥५२॥अर्थोपेताः
शास्त्रपारंगताश्चसंगीतज्ञाःपोषकाःस्युर्बहूनां॥ नानासौख्यैरन्वितास्तुप्रवीणाःवीणायोगेप्राणिनांजन्मयेषां॥८२॥ ॥इतिवीणायोगः
॥५३॥ ॥प्रोक्तैरेतैर्नभिसौख्यैश्चयोगाःस्यात्सर्वेषांप्राणिनांजन्मकामं॥ तस्मादेतेत्यंतयत्नादपूर्वाःपूर्वाचार्यैर्जातकेसंप्रदिष्टाः॥८३॥

उत्पातकेतुःशतनुर्निशिवादृश्येदृश्येदिवासिरिगर्भयशोदकश्च ॥ एवंस्थितःसमफलःपृथिवीपतित्वंजातोन्ययायःकुरुतेपरिपूर्णमूर्तिः॥१॥
॥ इतिचंद्रयोगः॥ ॥ इतिश्रीजातकाभरणोक्तनाभसयोगाःप्रोक्ताः॥ ॥वामवामेग्रहाःसर्वेसूर्यादीनांमुनिस्तथा॥ दरिद्रयोगंविजानीया
न्नात्रकार्याविचारणा॥८४॥ इतिदरिद्रयोगः ॥५६॥ करतुरेतश्चसंपर्काज्जायतेविषमागतिः॥ करसंपुटमादायबंध्याभवतिनिश्चितं॥८५
॥ इतिकरसंपुटयोगः॥५७॥ इतिश्रीपंचमहापुरुषादियोगमिलित्वाअष्टषष्टि ६८ योगाउक्ताःअग्रेअन्येपि ॥ मूलत्रिकोणस्वगृहोच्चसं-
स्थानभस्वराःकेंद्रगतामिथःस्युः॥नेकारककारव्याःकथितामुनींद्रैर्विज्ञेयप्राज्ञांभुवनेविशेषाः॥८६॥ प्रालेयरश्मिर्यदिमूर्तिवर्त्तीस्वमंदिरस्थो
निजतुंगजातः॥ कुजार्कजार्कामरराज्यपूज्याःपरस्परंकारकसंज्ञिताश्च॥८७॥ शुभग्रहेलग्नगतेंबरांबु १०।४ स्थितोग्रहःकारकसंज्ञकः-
स्यात्॥ तुंगत्रिकोणस्वगृहांशयातास्तेपोडमानेतपनोविशेषात्॥८८॥ नीचान्वयेयद्यपिजातजन्मंत्रीभवेत्कारकखेचराढ्यैः॥ राजान्व
येयस्ययदिप्रसूतिर्भूमीपतित्वंसकथंनयाति॥८९॥ वेशिस्थितोयस्यशुभोनवेगोलग्नंविलग्नंचलवेस्वकीये॥ केंद्राणिसर्वाणिचसंग्रहा
णितस्यालयेश्रीकुरुतेविलासं॥९०॥ केंद्रस्थितागुरुविलग्नकजन्मनाथामध्येचयस्यनितरांवितरंतिभाग्यं॥ शीर्षोदयोभ्युदयभेषुगताभ
वेयुरारंतमध्यमविरामफलप्रदास्ते॥९१॥इतिकारकयोगः॥६९॥संस्थाविलग्नेप्यथसप्तमेचपतंगमुख्यास्तुग्रहानितांतं॥ वदंतियोगंशक
टाख्यसंज्ञंजातोनरःस्याच्छकटोपजीवी॥९२॥ ॥इतिशकटयोगः॥७०॥ युग्मेयुग्मेभवेत्त्रीणिएकेकंचत्रिषुस्थितं॥नंदायोगःसविज्ञेयो

चिरायुश्चसुखप्रदः ॥९३॥ इतिनंदायोगः॥ ७१॥ लग्नेचजीवोयुगगेभृगुश्चद्यूनेचसौम्योदशमेमहीजः ॥केंद्रेत्वमीचारुफलप्रदाःस्युःसर्वार्थ-
दातारइतिप्रसिद्धः॥९४॥ ॥इतिदातारयोगः॥७२॥ घटेमेषेनरे ३ चापेतुलायांसिंहगेगृहे॥ राजहंसोभवेद्योगोराज्यास्पदसुखप्रदः॥९५॥
इतिराजहंसयोगः॥ ७३॥ सिंहासनेचहंसेचदंडेयोगेमरुकृध्वजे ॥ चतुःसागरयोगेचचिल्हिपुच्छोमहाफलं॥ ९६॥ तुलामकरमेषाद्यलग्नेवाह्य
थवाक्वचित् ॥ सिंहासनेचडमरौचिल्हिपुच्छःसशस्यते॥९७॥ मृगेकर्केचपुच्छःस्याद्राजहंसोसुखप्रदः ॥कुंभेचमन्मथेचैवचिल्हिपुच्छो
भिधीयते॥९८॥ मृगेकर्कध्वजेपुच्छःकन्यालौवृषभेझषः ॥चिल्हीपुच्छोभवेद्योगश्चतुःसागरगोचरे॥९९॥ योगोदितफलंपुच्छःकरोतिद्विगुणं
फलं॥ तेनयोगाधियोगोयंलग्नेपिकस्यचिन्मते॥१००॥ घटभून्येनृपसचिवोगोमहिषीहयगजैर्युक्तः ॥नीतिज्ञोबहुपुत्रोलग्नेपिचसम्मतंकेषु॥
॥१०१॥ इतिचिल्हिपुच्छयोगः॥७४॥ चंद्राष्टमेचक्रसंज्ञाकार्किशुक्रागृहेविधौ॥ केमद्रुमेचसंपूर्णेयोगोलालाटिकामतः॥१०२॥ आजन्मतोभवति-
कारगृहैःप्रसिद्धःशिल्पादिकर्मकुशलासुशलाकृतिश्च॥ भूर्यात्मजोपिलभतेविविधामलब्धींजन्मांतरेपिनजहातिललाटयोगे॥१०३॥ इतिललाटीयो
गः॥७५॥ राहुणासहितश्चंद्रःसपापोगुरुवीक्षितः॥ महापातकयोगोयंयदिशुक्रसमोभवेत्॥१०४॥ इतिमहापातकयोगः॥७६॥ भौमेनदृश्यते
लग्नंलग्नंपश्यतिभास्करः॥ गुरुशुक्रौनदृश्यंतेबलीवर्देनहन्यते॥१०५॥ इतिबलीवर्दहंतायोगः॥७७॥ आयस्थानगतेचंद्रेचंद्रस्थानेगतेरवौ॥ हठेन ५५
नागेविज्ञेयःपंचरात्रौविशेषतः॥१०६॥ इतिहठदंतायोगः॥७८॥ मदनयोर्यदायोगोलग्नेचराहुदर्शने॥ वृक्षस्थंमरणंतस्ययदिशुक्रसमोभवेत्॥

॥१०७॥ इतिवृक्षहंतायोगः॥७९॥षष्ठस्थानगतेशुक्रेतनुस्थानगतेकुजे॥नासाच्छेदकरोयोगोवदामिमुनिरुत्तमः॥१०८॥ ॥इतिनासाच्छेदयोगः॥८०
॥मंदेचदृश्यतेचंद्रोलग्नेचरविभार्गवौ॥शुभग्रहानपश्यंतिकर्णच्छेदोनसंशयः॥१०९॥ ॥इतिकर्णच्छेदयोगः॥८१॥कविनासहितोमंदोगुरुणास
हितःकविः॥शुभग्रहानपश्यंतिपादखंजोभवेन्नरः॥११०॥ इतिपादखंजयोगः॥८२॥लग्नाच्चसप्तमस्थानेशन्यर्केराहुसंस्थिते॥सर्पेणपीडितस्योक्ता
शय्यायांस्वपतोपिच॥१११॥ इतिसर्प्पहंतायोगः॥८३॥गुरुस्थानेगतेसौम्येशनिस्थानगतेकुजे॥ पंचविंशतिवर्षेचवनेव्याघ्रेणहन्यते॥११२॥ इति
व्याघ्रहंतायोगः॥८४॥शुक्रस्थानेगतेचंद्रेशुक्रस्थानेगतेशनौ॥अष्टाविंशतिवर्षेचअसिघातेनमृत्युदः॥११३॥ इतिअसिघातयोगः॥८५॥धर्मस्था
नगतेभौमेशन्यर्कराहुसंयुते॥शुभग्रहानपश्यंतिशरक्षेपेणहन्यते॥११४॥ इतिशरक्षेपहंतायोगः॥८६॥रविणासहितोभौमःशनिर्वाजीवसंयुतः॥
अष्टाविंशतिवर्षेचब्रह्मघातीनसंशयः॥११५॥ ॥इतिब्रह्मघातीयोगः॥८७॥रविस्थानगतेचंद्रेगुरुस्थानसमायुतः॥सागरेचस्थितेलग्नेपंचापत्यविनाश
कृत्॥११६॥ ॥इतिपंचापत्यविनाशयोगः॥८८॥ ॥अथदोलायोगः॥ ॥मीनेमेषेचचापेचस्थितेस्थानत्रयेगृहे॥दोलासंज्ञकयोगःस्याद्राज्यदोयमु-
दाहृतः॥११७॥सन्मानदानगुणपात्रपरीक्षितोवाकलानिधिःकौशलगीतनृत्यः॥मंत्रीश्वरोराजसभाविवेकीकेंद्रस्थितेपापविवर्जितेगुरौ॥११८॥ ॥
इतिदोलायोगः॥८९॥ ॥अथपदकविच्छेदयोगः॥ ॥लग्नस्थानगतेभौमःशन्यर्कराहुवीक्षितः॥योगःपदकविच्छेदोयदिशुक्रसमोभवेत्॥११९॥
इतिपदकविच्छेदयोगः॥९०॥केंद्रस्थानगतेभौमेसैंहिकेयेचसप्तमे॥तदानित्यंविजानीयादस्मान्मृत्युस्तदाभवेत्॥२०॥इतिइच्छतोमृत्युयोगः॥९१॥

लग्नात्सप्तमशीतांशुः पापाष्टशुभलग्नगः ॥ लग्नस्थितो यदा भानुः समांते म्रियते शिशुः ॥ १२१ ॥ इति मातृपितृहायोगः ॥ ॥ इति चतुराशीतियोगाः
शास्त्रांतराद्दवलोक्य लिखिताः ॥ ॥ अथाग्रे राजयोगप्रकरणं लिख्यते ॥ ॥ लग्नं लग्नपतिर्बलान्वितवपुः केंद्रत्रिकोणे शिवे पृच्छाजन्मविवाहयान
तिलके कुर्यान्नृपतिर्ध्रुवं ॥ सच्छीलं विभवान्वितं गजरुजं मुक्तातपत्रान्वितं जातो निम्नकुलेविभूतिपुरुषं शंसंति गर्गादयः ॥ १ ॥ एको शुक्रो जननसमये
लाभसंस्थे च केंद्रे जातो वैजन्मराशौ यदि सहजगते प्राप्यते वै त्रिकोणे ॥ विद्याविज्ञानयुक्तो भवति नरपतिर्विश्वविख्यातकीर्तिर्दानी मानी च भूरो हयगु-
णसहितः सद्गजैः सेव्यमानः ॥ २ ॥ दशमभुवननाथः केंद्रकोणे धनस्थे बलिपतिबलयाने प्रस्तसिंहासनेषु ॥ स भवति नरनाथो विश्वविख्यातकीर्तिर्मद
गलितकपोलैः सद्गजैः सेव्यमानः ॥ ३ ॥ एकोपि केंद्रभुवने नवपंचमे वा भास्वान्मयूखविमलीकृतदिग्विभागः ॥ निःशेषदोषमपहृत्य शुभप्रसूतं दीर्घायु
षं विगतरोगभयं करोति ॥ ४ ॥ चंद्रः पश्येद्यदादित्यं बुधः पश्येन्निशापतिं ॥ अस्मिन्योगे तु यो जातः स भवेद्वसुधाधिपः ॥ ५ ॥ यदि भवति च केंद्रे यामिनी
नाथ एव प्रददति प्रियभार्या पुत्रिणी वा सरूपा ॥ धनकनकसमृद्धिं माणिकं हीररत्नं रचयति मृगयाभिश्चंदनैश्चर्चितांगं ॥ ६ ॥ शुक्रो यस्य बुधो यस्य
यस्य केंद्रे बृहस्पतिः ॥ दशमोंगारको यस्य स जातः कुलदीपकः ॥ ७ ॥ हयरथनरनागै रत्नसम्यक्फलानां जलधितटनिवासी रत्नतुल्यं च धान्य
म् ॥ बहुजनकिलइष्टा सत्यवादी प्रसूतो भवति यदि च केंद्रे दैत्यकोणे बुधस्य ॥ ८ ॥ किं कुर्वंति ग्रहाः सर्वे यस्य केंद्रे बृहस्पतिः ॥ मत्तमातंगयूथा
नां भिनत्त्येकोपि केसरी ॥ ९ ॥ एक एव सुरराजपुरोधाः केंद्रगोथ नवपंचमगो वा ॥ लाभगो भवति यत्र विलग्ने तत्र शेषखचरैरबलैः किं ॥ १० ॥ भवति-

वदनमूर्तिर्वल्लभः कामिनीनां सकलजनसमर्थो दीर्घजन्मा विहाय ॥ ध्वजविषयगुणज्ञो द्रव्यमुख्यः प्रधानः सधनकनकपूर्णो दैत्यपो यस्य केंद्रे ॥ ११ ॥ धनवान्प्राज्ञः शूरो मंत्री वा दंडनायकः पुरुषः ॥ दशमस्थे रवितनये वृंदपुरग्रामनेता वा ॥ १२ ॥ तुलाकोदंडमीनस्थो लग्नस्थोपि शनैश्चरः ॥ करोति भूपतेर्जन्म वंशे च नृपतिर्भवेत् ॥ १३ ॥ दिव्यस्त्रीवरकांचनांबरगतामाधारलक्ष्मीमयः शास्त्रं कौतुकगीतनृत्यरसता व्यापारदीक्षागुरुः ॥ पुत्रभ्रातृजनान्वितः स्थिरमतिः कर्त्तातिप्रीत्यन्वितो जीवः केंद्रयदा भवेन्निजसुखी सत्कर्मकारी नरः ॥ १४ ॥ आकाशमंदिरगतस्तनुपः स्वगेहे कुर्यान्नृपं नृपतिचक्रवरैः सुसेव्यः ॥ सैन्यं प्रतापहतनाहतशत्रुपक्षं शक्रो यथा सुरगणैश्च विराजमानः ॥ १५ ॥ उपचयगृहसंस्थो ३।६।१०।११ जन्मदो यस्य चंद्रः स्वगृहमथ नवांशे केंद्रजातश्च सौम्यः ॥ सकलबलवियुक्तश्चैव पापाभिधानं स भवति नरनाथः शक्रतुल्यो बलेन ॥ १६ ॥ विद्याकलागुणविराजितकामधेनुर्भोगैः परं वरयुवतिजितकामराजः ॥ देशाधिपत्यपुरपत्तनगजश्रियांतो मीने सतो सकलमंडलदीसदीक्षैः ॥ १७ ॥ कामे च कन्यारिपुरंध्रसंस्थे केंद्रत्रिकोणे व्ययगे च राहुः ॥ कामी च शूरो बलवान्स भोगी गजाश्वछत्रं बहुपुत्रता च ॥ १८ ॥ मृगपतिवृषकन्याकर्कटस्थे च राहुर्भवति विपुललक्ष्मीराजराज्याधिपो वा ॥ हयगजनरनौकामेदिनीपंडितश्च स भवति कुलदीपो राहुतुंगो नराणाम् ॥ १९ ॥ केंद्रत्रिकोणे बुधजीवशुक्रा हस्या नराणां यदि जन्मकाले ॥ धर्मार्थविद्याप्रशकीर्त्तिलाभः शांतः सुशीलः स नराधिपः स्यात् ॥ २० ॥ भृगुसुरपूज्यो चंद्रमा केंद्रवर्त्ती बहुसुखधनवृद्धिः कर्मसाध्यं नराणाम् ॥ रविसुतशशिपुत्रे भानुजीवे त्रिकोणे क्षितिसुतदशमे पुराजयोगा वदंति ॥ २१ ॥ केंद्रत्रि

कोण्येषु भवंति सौम्या दुश्चिक्यलाभारिगताश्च पापाः॥ यस्य प्रयाणेप्यथ जन्मकाले ध्रुवं भवेत्तस्य महीपतित्वं॥२२॥ लाभे त्रिकोणे यदि शीतरश्मिः
करोत्यवश्यं क्षितिपालतुल्यम्॥ कुलद्वयानंदकरं नरेंद्रं ज्योत्स्नाहि दीपस्तमनाशकारी॥२३॥ शत्रुस्थाने यदा जीवो लाभस्थाने शशी भ-
वेत्॥ गृहमध्ये स जातश्च विख्यातकुलदीपकं॥२४॥ लग्नाधिपो वा जीवो वा शुक्रो वा यत्र केंद्रगः॥ तस्य पुंसश्च दीर्घायुः स भवेद्राज
वल्लभः॥२५॥ दशमे बुधसूर्यौ च भौमराहू च षष्ठगौ॥ राजयोगोत्र यो जातः स पुमान्नायको भवेत्॥२६॥ आदौ जीवः शनिश्चांते गृहमध्ये
निरंतरं॥ राजयोगं विजानीयात्कुटुंबबलमुत्तमं॥२७॥ सहजस्थो यदा जीवो मृत्युःस्थाने यदा सितः॥ निरंतरं गृहंमध्ये राजा भवति नि-
श्चितं॥२८॥ जीवो वृषे स्कधाराश्मिर्मिथुने मकरे कुजः॥ सिंहे भवति सौरिश्च कन्यायां बुधभास्करौ॥२९॥ तुलायामस्फुराचार्यौ राजयो
गो भवेदयं॥ अत्र योगे समुत्पन्नो महाराजो भवेन्नरः॥३०॥ अष्टमे द्वादशे वर्षे यदि जीवति मानवः॥ सार्वभौमस्तदा राजा जायते वि
श्वपालकः॥३१॥ एको जीवो यदा लग्ने सर्वे योगास्तदा शुभाः॥ दीर्घजीवो महाप्राणो जातको नायको भवेत्॥३२॥ धने शुक्रोथ भौम
श्च मीने जीवस्तुला बुधः॥ नीचस्थो शनिचंद्रौ च राजयोगस्तदा ध्रुवम्॥३३॥ अस्मिन्योगे च यो जातः स राजा धनवर्जितः॥ दाता भो
क्ता च विख्यातो मान्यो मंडलनायकः॥३४॥ मीने शुक्रो बुधश्चांते धने राहुस्तनौ रविः॥ सहजे च भवेद्भौमो राजयोगोभिधीयते॥३५॥ 
सहजे च यदा जीवो लाभस्थाने च चंद्रमाः॥ स राजा गृहमध्यस्थो विख्यातः कुलदीपकः॥३६॥ शुभग्रहाः शुभक्षेत्रे भवंति यदि केंद्र-

गाः ॥ तदा शुभानि कर्माणि स करोति द्विजातकः ॥ ३७ ॥ उच्चस्थानगताः सौम्याः केंद्रस्थाने भवंति चेत् ॥ ध्रुवं राज्यं भवेत्तस्य यदि नीचसु
तो भवेत् ॥ ३८ ॥ स्वक्षेत्रस्थो यदा जीवो बुधः सौरिश्च चेद्भवेत् ॥ तस्य जातस्य दीर्घायुः संपत्तिश्च पदे पदे ॥ ३९ ॥ मीने बृहस्पतिः शुक्रश्चं
द्रमाश्च यदा भवेत् ॥ तस्य जातस्य राज्यं स्यात्पत्नी च बहुपुत्रिणी ॥ ४० ॥ पंचमस्थे यदा जीवो दशमस्थश्च चंद्रमाः ॥ स राजवान्महाबुद्धिस्त
पस्वी च जितेंद्रियः ॥ ४१ ॥ सिंहे जीवस्तुलाकीटश्चापेषु मकरेपि च ॥ ग्रहा यदा तदा जातो देशभोगी भवेन्नरः ॥ ४२ ॥ तुलाकोदंडमीनस्थो
लग्नसंस्थोपि चेच्छनिः ॥ करोति भूपतेर्जन्म महापुण्यानुभावतः ॥ ४३ ॥ विद्यास्थाने यदा सौम्याः कर्कस्थाने च चंद्रमाः ॥ धर्मस्थाने
यदा सौम्या राजयोगस्तदा भवेत् ॥ ४४ ॥ मकरे च घटे मीने वृषे मिथुनमेषयोः ॥ ग्रहास्तदा च विख्यातो राजा भवति मानवः ॥ ४५ ॥ बुध
भार्गवजीवार्कियुक्तो राहुश्चतुष्टये ॥ कुरुते कमलारोग्यपुत्रमानादिकं फलं ॥ ४६ ॥ चतुर्थभुवने शुक्रो गुरुचंद्रधरासुताः ॥ रविसौरियुताः
संति राजा भवति निश्चितं ॥ ४७ ॥ अष्टमे च व्यये क्रूरो मध्ये च क्रूरसौम्यकौ ॥ राजयोगोत्र यो जातो महाभूपो भविष्यति ॥ ४८ ॥ लग्ने सौरि
स्तथा चंद्रस्त्रिकोणे जीवभास्करौ ॥ कर्मस्थाने भवेद्भौमो राजयोगोभिधीयते ॥ ४९ ॥ नवमे च यदा सूर्यः स्वगृहस्थो भवेत्तदा ॥ तस्य जीवति
नो भ्राता स्यादेकोपि नृपैः समः ॥ ५० ॥ द्वित्रितुर्ये सितेषष्ठे कर्मण्यपि यदा ग्रहाः ॥ राजयोगं विजानीयाज्जातस्तुच्छकुलेपि चेत् ॥ ५१ ॥ लग्ने क्रू
रे व्यये सौम्यो धने क्रूरश्च जायते ॥ राजयोगोत्र यो जातो भूपतिर्भवति स्फुटं ॥ ५२ ॥ लग्ने क्रूरो व्यये क्रूरो धने सौम्यो यदा भवेत् ॥ सप्तमे

भवतिक्रूरः परिवारक्षयंकरः॥५३॥धनेचंद्रश्चशुक्रश्चमेषेजीवोयदाभवेत्॥दशमेराहुशुक्रौचराजयोगोभिधीयते॥५४॥सिंहेजी
वोथकन्यायांभार्गवोमिथुनेशनिः॥स्वक्षेत्रेहिबुकेभौमः सपुमान्नायकोभवेत्॥५५॥शनिचंद्रौचकन्यायांसिंहेजीवोघटेतमः॥मकरेच
कुजस्तत्रजातःस्याद्विश्वपालकः॥५६॥शुक्रोजीवोरविर्भौमश्चापेमकरकुंभयोः॥मीनेचवत्सरेत्रिंशेसमर्थः सर्वकर्मसु॥५७॥कूर्मलग्नेजी
वशुक्रौलाभेचंद्रजभार्गवौ॥मेषेभानुश्चजातोयोयोगेस्मिन्नृपतिर्भवेत्॥५८॥कर्मस्थानेयदाजीवोबुधःशुक्रस्तथाशशी॥सर्वकर्माणि
सिद्ध्यंतिराजमान्योभवेन्नरः॥५९॥षष्ठेष्टमेपंचमेवानवमेद्वादशेतथा॥सौम्यक्रूरग्रहैर्योगेराजमान्योनसंशयः॥६०॥पंचमेचयदाषष्ठे-
चाष्टमेनवमेक्रमात्॥भौमराहुसितार्काःस्युर्जातकःकुलपालकः॥६१॥लग्नेसौरिस्तथाचंद्रश्चाष्टमेभार्गवोयदा॥जायतेत्रनृपोयोगेमानीभू
रिप्रियःसदा॥६२॥मिथुनस्थोयदाराहुःसिंहस्थोभूमिनंदनः॥अत्रयोगेनरोजातोनृपोश्वगजनायकः॥६३॥चापार्द्धेशशिनायुक्तोयदिसूर्यः
प्रजायते॥लग्नेचसबलोमंदोमकरेचकुजोभवेत्॥६४॥ अत्रयोगेसमुत्पन्नोमहाराजोभवेन्नरः॥ दूरादेवनमंत्यस्यप्रतापेश्वरणौनृपाः॥
॥६५॥उच्चाभिलाषकःसूर्यस्त्रिकोणस्थोयदाभवेत्॥अपिनीचकुलेजातोराजास्याद्धनपूरितः॥६६॥धनस्थानेयदाशुक्रोदशमेचबृह
स्पतिः॥षष्ठेचसिंहिकापुत्रोराजाभवतिविक्रमे॥६७॥चतुर्यहायदैकत्रयदिसौम्याभवंतिहि॥भ्रातृधीधर्मलग्नाद्यैराजयोगोभवेद्ध्रुवं॥६८
सर्वैर्ग्रहैर्यदाचंद्रोविनाहेलिंनिरीक्ष्यते॥षष्ठाष्टमेसंस्थितश्चसदीर्घायुर्नराधिपः॥६९॥नवमेपंचमेस्थानेचतुर्थेचयदाग्रहाः॥आदौजा-

तश्चनश्यंतिपश्चाज्जातश्चजीवति ॥७०॥ विवाहितायामन्यस्यामेकपुत्रोभवेत्तदा ॥ विख्यातोभुवनत्यागीसदीर्घायुर्महीपतिः ॥७१॥ क
न्यायांचयदाराहुः शुक्रोभौमः शनिस्तथा ॥ नत्रजातस्यजायेतकुबेरादधिकंधनं ॥७२॥ लग्नेमीनेजीवशुक्रौमेषेर्कोमकरेकुजः ॥दासवं
शेपिजातोसौराजाछत्रधरोभवेत् ॥७३॥ भ्रातृस्थानेयदाजीवोलाभस्थानेयदाशशी ॥ सलोकेगृहमध्यस्थोजायतेकुलदीपकः ॥७४॥ द
शमस्थौबुधादित्यौषष्ठेराहुर्धरास्रुतौ ॥ राजयोगोत्रयोजातःसपुमान्नायकोभवेत् ॥७५॥ चतुर्गृहैरेकगृहेचसंस्थैर्धीधर्मदुश्चिक्यतनु
स्थितैर्वा ॥ दासश्चजातःक्षितिपालतुल्योभवेन्नरेंद्रोथसमुद्रपारगः ॥७६॥ सुरगुरुशशियुक्तेकर्कटेलग्नसंस्थेभृगुतनयबलिष्ठःकेंद्रजातो
थशेषैः ॥ शिवसहजरिपुस्थैर्यस्यजन्मात्रियोगेनियतमितियदायुश्चक्रवर्तीधनेशः ॥७७॥ तुलेमीनमेषेवृषेदैत्यपुत्रो भवेद्राजमानीकला
कौतुकीच ॥ अयंपुत्रजातंचिरंजीवितंचभवेद्वत्सरेवन्हियुग्मे २३चभुंक्ते ॥७८॥ लग्नाधिपतिःकेंद्रेबलपरिपूर्णःकरोतिपरमर्द्धिम् ॥ गोपालकुलेपिजातं
किंपुनरिहनृपतिसंभूतं ॥७९॥ रविस्तृतीयेभृगुनंदनःसुखेबुधद्वितीयेयदिपंचमेस्थितः ॥ ननीचराशौनचखांतवेश्मगोभवेन्नरेंद्रस्त्रि
समुद्रपालकः ॥८०॥ यदिभवतिचकेंद्रेधर्मगेस्वोच्चसंस्थेस्रुतभवनगतश्चेद्वाक्पतिर्जन्मकाले ॥ सभवतिनरनाथःसार्वभौमोजितारिःश
शिबुधभृगुपुत्रैरन्वितोवीक्षितोवा ॥८१॥ विलग्ननाथःखलजाश्चसंस्थाःसुहृद्गृहेमित्रदशापतिःस्थितः ॥ करोतिसार्वंपृथिवीत-
लस्यदुर्वारवैरिघ्नमहोदयंशुभं ॥८२॥ लग्नंविहायकेंद्रेसकलकलापूरितोनिशानाथः ॥ विदधातिमहीपालंविक्रमबलवाहनोपेतं

॥८३॥ स्वोच्चैः स्वकीयभुवनेक्षितिपालतुल्यो लग्नेऽर्कजे भवति देशपुराधिनाथः ॥ दारिद्र्यदुःखपरपीडित एव लोको शेषेषु सर्वजननिंद्य
शरीरचेष्टः ॥८४॥ लग्ने उच्चपदोगते दिनपतिश्चंद्रे धनस्थे भृगौ दुश्चिक्येतमसंयुते सुखगते जीवे व्ययस्थे बुधे ॥ लाभे सूर्यसुते हि शत्रु
भुवने जाते कुले भूपतेर्जातोयं मनुजः सदा नृपगणे सम्राट्पदं गच्छति ॥ ८५॥ उच्चाभिलाषी सविता त्रिकोणे शशी तथा जन्मनि य-
स्य जंतोः ॥ सस्याति पृथ्वी बहुरक्तपूर्णा बृहस्पतिः कर्कटके यदि स्यात् ॥ ८६॥ सर्वैर्व्याकाशवासास्फुटिकविशलता काशकार्पास
भेशो लग्नं संवीक्ष्यमाणो नरपतितिलकं तं समुत्पादयंति ॥ नीयंते स्य प्रशस्त्यै जलदनिभमथ श्वेतमानं यशोभिर्बिभ्राणं शेषशंकां
मधुमथनमतो भद्रमालार्पितश्रीः ॥८७॥ सर्वैर्गगनभ्रमणैर्दृष्टे लग्ने भवेन्महीपालः ॥ बलिभिः सौख्यार्थसुतो विगतभयो दीर्घजी
वी च ॥८८॥ चतुर्थे भुवने शुक्रो दशमे च धरासुरः ॥ रविः सौरिर्भवेद्युक्तो राजा भवति निश्चितं ॥८९॥ मिथुने जे वृषे मीने कुंभे च म
करे ग्रहः ॥ योयोगेस्मिन्नरो जातो जायते गजमानवान् ॥९०॥ जीवनिशाकरसूर्याः पंचमनवमतृतीयगात् ॥ लग्नाय दि भवति तदा
राजा कुबेरतुल्योधनप्रसवैः ॥ ९१॥ सिंहे जीवस्तुलाकीटधनुर्मकरकेषु च ॥ ग्रहाश्चान्ये यदा जातो देशभोगी भवेन्नरः ॥ ९२॥ स्वगृहे च
भवेत्सूर्यस्तुलायां च भवेत्सितः ॥ मिथुने तिष्ठति सौरी राजयोगः प्रजायते ॥९३॥ षष्ठे च पंचमे चैव नवमे द्वादशे तथा ॥ सौम्यक्रूरग्रहा योगा ५९
राजमान्यः सकंटकः ॥९४॥ त्रिकोणकोणे बुधजीवशुक्रास्त्रिषट्दशे सोमसुतेर्कपुत्रे ॥ जायास्थिते चेत्परिपूर्णचंद्रे नूनं स जातो नृपतेः स

मानः ॥ ९५ ॥ लग्नेसौरिस्तथाचंद्रश्चाष्टमेभुवनेसितः ॥ राजमान्योमहाकामीभोगपत्नीजनस्तथा ॥ ९६ ॥ धनेशुक्रश्चभौमश्चमी
नेजीवोघटेबुधः ॥ नीचचंद्रोरविर्युक्तोराजयोगोभिधीयते ॥ ९७ ॥ अस्मिन्योगेनरोजातोराजाविभववर्जितः ॥ दानभोगादिविख्यातःस
मान्यःसभवेन्नरः ॥ ९८ ॥ मीनशुक्रेबुधश्चांते १२ लग्नेसूर्यःशशीधने ॥ सहजेचभवेद्राहूराजयोगःप्रचक्षते ॥ ९९ ॥ मीनेजीवस्तथाशुक्र
श्चंद्रमाश्चयदाभवेत् ॥ तस्यजातस्यराज्यंस्यात्पत्नीचबहुपुत्रिका ॥ १०० ॥ आयस्थानेयदासौम्यःक्रूरस्थानीयचंद्रमाः ॥ कर्मस्थ
नेपुनःसौम्यस्तदाराज्यंविधीयते ॥ १ ॥ आदौजीवःपंचमेचदशमेचंद्रमाभवेत् ॥ राजमान्योमहाबुद्धिस्तेजस्वीचातितेजसः ॥ २ ॥ ॥
इतिचतुराशीतिराजयोगप्रकरणम् ॥ ॥ अथारिष्टयोगाः ॥ ॥ सूर्याच्चनवमेतातश्चंद्रेमाताचतुर्थगः ॥ भौमस्यतृतीयेभ्राताबुधे
चतुर्थेमातुलः ॥ १ ॥ गुरोःपंचमतःपुत्रोभृगुःसप्तमतोस्त्रियः ॥ शनेरष्टमतोमृत्युर्यदाक्रूरोभवेन्नरः ॥ २ ॥ ॥ अथद्वादशभवनविचारः ॥
॥ सूर्योभौमस्तथाराहुःशनिर्मूर्तौयदान्वितः ॥ संपातोरक्तपीडाचसौम्यैःसर्वनिरोगतः ॥ ५ ॥ भौमक्षेत्रेयदाजीवोजीवक्षेत्रेचभूसुतः
॥ द्वादशेवत्सरेमृत्युर्बालकस्यनसंशयः ॥ ६ ॥ धनस्थानेयदाभौमःशनैश्चरसमन्वितः ॥ सहजेचभवेद्राहुर्वर्षमेकंसजीवति ॥ ७ ॥ चतु
र्थेचयदाराहुःषष्ठेचंद्रोष्टमेपिवा ॥ सद्यश्चैवभवेन्मृत्युःशंकरोयदिरक्षति ॥ ८ ॥ अष्टमस्थोनिशानाथःकेंद्रेपापेनसंयुतः ॥ चतुर्थेचय
दाराहुर्वर्षमेकंसजीवति ॥ ९ ॥ लग्नेव्ययेधनेक्रूरोयदामृत्यौचजायते ॥ विष्टयामार्गबंधःस्याद्द्वादशाष्टमवत्सरे ॥ १० ॥ सप्तमेभवनेभौमो-

अष्टमेभार्गवोयदा ॥ नवमेभवनेसूर्यअल्पायुस्तस्यकथ्यते ॥ ११ ॥ धनेक्रूरः स्वभवनेक्रूरःपातालगोयदा ॥ दशमेभुवनेक्रूरः कष्टंजीवतिजातकः ॥ १२ ॥ स्मरे व्ययेच सहजेमध्येक्रूरेयदाग्रहाः ॥ तदाजातस्यबालस्यशरीरेकष्टमादिशेत् ॥ १३ ॥ लग्नस्थानेयदाभौमोद्वादशेचयदागुरुः ॥ शुक्रः शत्रुगृहेयस्यमासमेकंसजीवति ॥ १४ ॥ क्षीणचंद्रेगतेलग्नेक्रूरग्रहनिरीक्षिते ॥ द्वितीयेद्वादशेभौमो मासमेकंसजीवति ॥ १५ ॥ मूर्तिसप्तमयोः क्रूराःपापव्ययाद्वितीयगाः ॥ चतुर्थेचयदाराहुःसप्ताहान्म्रियतेतदा ॥ १६ ॥ षष्ठाष्टमेपिचंद्रः सद्योमरणायपापसंदृष्टः ॥ अष्टाभिःशुभदृष्टोवर्षैर्मिश्रैस्तदर्द्धेन ॥ १७ ॥ द्वादशस्थोयदासौरिर्लग्नसंस्थश्चभूसुतः ॥ चतुर्थःपौरिकेयश्चअष्टमासान्सजीवति ॥ १८ ॥ शुभलग्नेयदाजीवोह्यष्टमेचशनैश्चरः ॥ रंध्रसंस्थेचपापेचसद्योमृत्युप्रदोभवेत् ॥ १९ ॥ चतुर्थेनवमेसूर्येअष्टमेचबृहस्पतौ ॥ द्वादशेचशशांकेचसद्योमृत्युकरोभवेत् ॥ २० ॥ शशिसूर्यसितेकेंद्रे संयुक्तश्चंद्रमार्किणा ॥ इतिवर्षद्वयेनैवजातकंशिष्टभाविनः ॥ २१ ॥ गुरुमंदग्रहेवक्री मंदगेबुधभास्करे ॥ ईप्सितंकुरुतेमृत्युंमंदेचैकादशेध्रुवं ॥ २२ ॥ सूर्यमंदगृहेशुक्रोगुरुणाचविलोकितः ॥ नवभिर्मारयत्येनंवर्षैर्जातंनसंशयः ॥ २३ ॥ सूर्येणसहितश्चंद्रोबुधगृहगतः सदा ॥ नवीक्षितश्चसौम्येननववर्षेणमृत्युदः ॥ २४ ॥ बुधःसूर्येंदुसंयुक्तोवीक्षितोपिशुभैर्ग्रहैः ॥ वर्षैरेकादशैस्तेनमारयत्येवनिश्चितम् ॥ २५ ॥ लग्नादष्टमगोराहुः शनिःसूर्यविलोकितः ॥ निरीक्षितः शुभैः कुर्यादष्टद्वादशभिः क्षयं ॥ २६ ॥ धनेराहुर्बुधः शुक्रः सौरिः सूर्योयदास्थितः ॥ तत्रजातोभवेन्मृत्युर्मृतेपितरिजायते ॥ २७ ॥ व्ययेराहुःसौ

रिसौम्योजीवोलग्नेचपंचमे ॥ अत्रयोगेचयोजातोजानुमात्रःसनश्यति ॥ २८ ॥ जीवार्कराहुभौमाःस्युश्चत्वारःक्रूरवेश्मगाः ॥ सप्त
मेचग्रहेशक्रोदेहकष्टकराःसदा ॥ २९ ॥ गुह्यस्थानेयदाभौमोराहुःसौरिसमन्वितः ॥ नृपपीडाभवेत्तस्यस्वासनेनैवतिष्ठति ॥ ३० ॥ चतुर्थे
राहुसौरार्काःषष्ठेचंद्रोबुधःकुजः ॥ भार्गवश्चात्रयोजातःसगृहस्यक्षयंकरः ॥ ३१ ॥ एकःपापोष्टमस्थोपिशत्रुक्षेत्रेयदाभवेत् ॥ पापेनवी
क्षितोवर्षान्मारयत्येवबालकं ॥ ३२ ॥ भौमभास्करमंदाश्चशत्रुक्षेत्रेऽष्टमेयदा ॥ यमेनरक्षितोप्येषःवर्षमात्रंसजीवति ॥ ३३ ॥ वक्रीश
निर्भौमगेहेकेंद्रेषष्ठेऽष्टमेपिवा ॥ कुजेनबलिनादृष्टोहंतिवर्षद्वयेशिशुः ॥ ३४ ॥ शनिराहुकुजैर्युक्तःसप्तमेनवमेशशी ॥ सप्तमेदि
वसेहंतिमासेवासप्तमेशिशुः ॥ ३५ ॥ लग्नस्थश्चयदाभानुःपंचमस्थोनिशाकरः ॥ अष्टमस्थायदापापास्तदाजातोनजीवति ॥ ३६
लग्नपःपापसंयुक्तोलग्नेवापापमध्यगे ॥ लग्नात्सप्तमगःपापस्तदाचात्मवधोभवेत् ॥ ३७ ॥ क्रूरक्षेत्रेयदाजीवोलग्नेशोस्तंगतोभवेत्
॥ अकर्माचतदाजातःसप्तवर्षाणिजीवति ॥ ३८ ॥ अष्टमेचयदासौरिर्जन्मस्थानेचचंद्रमाः ॥ मंदश्चोदररोगीचगात्रहीनश्चजायते ॥ ३९
शनिक्षेत्रेयदाभानुर्भानुक्षेत्रेयदाशनिः ॥ द्वादशेवत्सरेमृत्युस्तस्यजातस्यजायते ॥ ४० ॥ बुधभौमौयदालग्नेषष्ठस्थानेथवास्थितौ ॥
तस्करश्चौरकर्मास्यात्हस्तपादौचनश्यतः ॥ ४१ ॥ षष्ठेष्टमेवामृत्नौचशत्रुक्षेत्रेयदाबुधः ॥ चतुर्वर्षेभवेन्मृत्युर्बालकस्यनसंशयः ॥ ४२ ॥
अष्टमस्थोयदाराहुःकेंद्रस्थानेचचंद्रमाः ॥ सद्यएवभवेन्मृत्युर्बालकस्यनसंशयः ॥ ४३ ॥ चतुर्थस्थयदाराहुःषष्ठाष्टमगृहेशशी ॥ विं

शत्यादिवसैर्मृत्युर्बालकस्यनसंशयः ॥ ४४॥ सप्तमेनवमेराहुः शत्रुक्षेत्रेयदाभवेत् ॥ षोडशेवत्सरेमृत्युर्बालकस्यनसंशयः ॥ ४५॥ द्वा
दशस्थोयदाचंद्रः पापः स्यादष्टमेगृहे ॥ एकमासेभवेन्मृत्युस्तस्यबालस्यनिश्चितं ॥ ४६॥ जन्मस्थानेयदाराहुः षष्ठस्थानेचचंद्रमाः
॥ अपस्मारस्तदारोगोबालकस्यहिजायते ॥ ४७॥ भार्गवेणयुतश्चंद्रः षष्ठाष्टमगतोभवेत् ॥ मंदाग्न्युदररोगीचहीनांगोपिचबालकः ॥
॥ ४८॥ षष्ठाष्टमेयदाचंद्रोबुधयुक्तश्चतिष्ठति ॥ विषदोषेणबालस्यतदामरणमुच्यते ॥ ४९॥ भानुनासंयुतश्चंद्रः षष्ठाष्टमगतोभवेत् ॥
गजदोषेणमृत्युर्वासिंहदोषेणवाभवेत् ॥ ५०॥ एकोपियदिमूर्तौस्याज्जन्मकालेयदाभवेत् ॥ स्थानहीनोभवेद्बालोवृत्तिर्दुष्टासदापुनः
॥ ५१॥ लग्नेष्टमेयदाराहुश्चंद्रोवायदिदृश्यते ॥ दशाहैर्जायतेतस्यबालस्यमरणंध्रुवं ॥ ५२॥ लग्नाच्चनवमेसूर्यः सूर्यपुत्रेतथाष्टमे ॥ ए
कादशेभार्गवेचमासमेकंनजीवति ॥ ५३॥ नवमेदशमेचंद्रः सप्तमेचयदासितः ॥ पापेपातालसंस्थेचवंशच्छेदकरोनरः ॥ ५४॥ शत्रुक्षेत्रेऽ
ष्टमेषष्ठेद्वितीयेद्वादशेरविः ॥ सजीवतिषट्वर्षाणिबालकोनात्रसंशयः ॥ ५५॥ शत्रुक्षेत्रेऽष्टमेमूर्तौबुधः षष्ठेभजायते ॥ बालोजीवतिवर्षाणिच
त्वारिनात्रसंशयः ॥ ५६॥ एकादशेतृतीयेचनवमेपंचमेगुरौ ॥ शत्रुक्षेत्रेवृद्धस्थानेभवेत्पंचाशदस्यायुः ॥ ५७॥ नवमेपंचमेवापिरिपुक्षेत्रेबृ
हस्पतिः ॥ नदाषट्त्रिंशद्वर्षाणिजीवतेनात्रसंशयः ॥ ५८॥ मित्रक्षेत्रेकादशमेदशमेवायदागुरुः ॥ शत्रुक्षेत्रेयदाशुक्रोद्वितीयेद्वादशेभवेत् ॥
एकविंशतिवर्षायुर्जायतेबालकोध्रुवं ॥ ५९॥ शत्रुक्षेत्रेष्टमेषष्ठेद्वितीयेद्वादशेशनिः ॥ अष्टदिनान्यष्टमासाअष्टवर्षाणिजीवति ॥ ६०॥ चंद्र

क्षेत्रेयदाभौमेजायतेमनुजःसदा ॥ रक्तपित्तेनहीनांगोनानाव्याधिसमन्वितः ॥६१॥ चंद्रक्षेत्रेयदाचांद्रिर्जायतेयस्यजन्मनि ॥सजातः
क्षयरोगीस्यात्कुष्टादिभिरुपद्रुतः ॥६२॥ राहोचकेंद्रगेमृत्युःपापानांदृष्टिसंयुते ॥ संवत्सरेतुदशमेषोडशेतुविशेषतः ॥६३॥ चंद्रःसप्तम
भुवनेशनिभौमराहुसंयुतोभवति ॥ यदासप्तमदिवसेमृत्युःसप्तममासेनसंदेहः ॥६४॥ भौमक्षेत्रेयदाजीवोषष्ठेष्टमेचचंद्रमाः ॥
षष्ठेष्टमेभवेन्मृत्यूरक्षकोयदिशंकरः ॥६५॥ जन्मसप्तमभेसौरिरष्टमेयदिचंद्रमाः ॥ब्रह्मपुत्रोयदाजातःसोपिपुत्रोनजीवति ॥६६॥ष
ष्ठाष्टमेयदाचंद्रोरविर्भवतिसप्तमः ॥ पितृमातृधनंहंतिमासमेकंनजीवति ॥६७॥ द्वादशेजीवशुक्रौचजन्मतोराहुरेवच ॥ सप्तमेचयदा
सौरिर्वर्षमेकंनजीवति ॥६८॥ भौमेदिवाकरेछिद्रेजातःशत्रुगृहेयदि ॥ सनरोम्रियतेवश्यंयमोमासेनरक्षकः ॥६९॥ यदालग्नेग्रहःक्रू
रोषष्ठाष्टमेपिचंद्रमाः ॥ तदासद्योभवेन्मृत्युर्जातकस्यनसंशयः ॥७०॥चतुर्थेपियदाराहुःकेंद्रेभवतिचंद्रमाः ॥ विंशद्वर्षेभवेन्मृत्युर्जात
कस्यनसंशयः ॥७१॥ सप्तमस्थोयदाराहुर्जन्मकालेयदातदा ॥दशवर्षैर्भवेन्मृत्युरमृतंयदिपीयते ॥७२॥लग्नेष्टमेयदाराहुश्चंद्रोवायदि
पश्यति ॥जातकस्यतदामृत्युर्यदिशक्रेणरक्षितः ॥७३॥ दशमेपियदाभौमउच्चशत्रुगृहेस्थितः ॥जातकस्यभवेन्मृत्युर्मातुश्चैवनसंश
यः ॥७४॥लग्नस्थितोयदाभानुःपंचमस्थोनिशापतिः ॥लग्नेष्टमेस्थिताःपापास्तदाजातोनजीवति ॥७५॥लग्नात्सप्तमशीतांशुःपापाष्ट
मेषुलग्नगः ॥ लग्नस्थितोयदाभानुर्मासेनम्रियतेशिशुः ॥७६॥ धनेगुरुःसैंहिकेयोभौमःशुक्रश्चसप्तमे ॥अष्टमेरविचंद्रौचम्लेंच्छःस्या

मा॰सा॰ द्यौवनेस्थितः॥७७॥लग्नस्थानेयदाभौमो अष्टमेचदिवाकरः॥ सौरिश्चतुर्थे भुवनेतदाकुष्टीभवेन्नरः॥७८॥ धर्मस्थानेयदापापालग्नात्सप्त पद्ध॰
६२ पश्चतुर्थगः॥ कर्मस्थानगतोराहुस्तदाम्लेंच्छोभवेद्ध्रुवं॥ ७९॥ व्ययेभवनगेचंद्रेवामचक्षुर्विनश्यति॥ यदासूर्योद्वितीयस्थस्तदाअं
धंसमादिशेत्॥८०॥सिंहलग्नेयदाजन्मशनिर्मूर्तौयदाभवेत्॥ चक्षुर्हीनोभवेद्बालःशुक्रेजन्मांधकोभवेत्॥८१॥ होरायांद्वादशेराशौस्थि
तोयदिदिवाकरः॥करोतिदक्षिणेकाणंवामनेत्रेचचंद्रमाः॥८२॥ स्वस्थानेलग्नतःक्रूरःक्रूरःपातालगोपुनः॥ दशमेभुवनेक्रूरेकष्टंजी
वतिजातकः॥८३॥अस्मिन्योगेनयोजातोमातुर्दुःखकरोभवेत्॥ यदिर्जीवेदसौजातोमातृपक्षक्षयंकरः॥८४॥क्रूरक्षेत्रेभवेत्सूर्यःक-
न्यायांक्रूरसंस्थितः॥ क्रूरक्षेत्रेभवेद्राहुःकष्टंजीवतिजातकः॥८५॥ शुक्रेचवाक्पतौबुद्धेनीचेराहुसमन्विते॥ चंद्रमाश्चनपश्येतसोपिबा
लोनजीवति॥८६॥षष्ठाष्टमेयदाचंद्रेद्वादशेरविमंगलौ॥ सोपिजातोनजीवेतरक्षनेयदिशंकरः॥८७॥षष्ठाष्टमेयदाकेतुःकेंद्रीभवति
चंद्रमाः॥सद्योबालकमृत्युःस्याद्रक्षितायदिशंकरः॥८८॥ चंद्रोबुधस्तथासूर्यःशनिश्चांतेयदाभवेत्॥ मध्यस्थानेयदाभौमोहीनदृ-
ष्टिस्तदाभवेत्॥८९॥ अर्कःसौरिस्तथाभौमःस्वर्भानुःकेतुसंयुतः॥नीचसंयुक्तदृष्टिःस्यात्सजातोमातृघातकः॥९०॥ रविराहूसौरिभूमौ
जीवोलग्नेचपंचमे॥ योगेस्मिंस्त्वपियोजातोजातमात्रोविनश्यति॥९१॥ क्रूरक्षेत्रेगतोजीवोरवीराहुर्धरासुतः॥ सप्तमेभुवनेशुक्रो ६२
देहीकष्टंप्रयातिच॥९२॥ क्रूरेलग्नेभवेज्जातस्तत्स्वामीक्रूरचेतसः॥आमघातोभवेत्तस्यशरीरेकष्टमादिशेत्॥९३॥सप्तमेभवने

भौमः पंचमेचदिवाकरः ॥ अरण्येचभवेज्जन्मवृक्षालयेनसंशयः ॥९४॥ एकःपापोयदालग्नेलग्नेशोवानपश्यति ॥ सूर्यःपश्यतिनोल-
ग्नमन्यजातस्तदाभवेत् ॥ ९५॥ तिथिप्रांतेदिनांतेचलग्नस्यांतेतथैवच ॥ चरांशेपिचयोजातिअन्यजातःशिशुर्भवेत् ॥ ९६ ॥ नप-
श्यतिशशीलग्नं मध्यस्थः सौम्यशुक्रयोः ॥ तातेपरोक्षेजन्मस्यात्भौमेस्तेवातनौयमे ॥९७॥ जीवक्षेत्रगतेचंद्रेशुक्रेचेतरराशि
गे ॥ द्रेष्काणेचतदंशेवापरैर्जातःसइष्यते ॥९८॥ नलग्नमिंदुर्नगुरुर्निरीक्षितेनवाशशांकोरविणासमागतं ॥ सौरेणवार्केण युतश्चवाश
शीपरेणजातःप्रवदंतिसूरयः ॥९९॥ लग्नंपश्यतिनोंगिरानचभृगुर्जारेणजातःशिशुःक्षोण्यर्कःसमवेक्षतेशशधरोयोगेशिवावन्यजे ॥
चंद्रःपापयुतोदिनेशसहितःस्यादेवमप्यन्यजः प्रोक्तंप्राङ्मुनिपुंगवैःस्फुटमिदंयोगत्रयंजायते ॥ १॥ यदिवापिभवेच्चंद्रोजन्माष्टम
द्वितीयगः ॥ द्वादशैकादशस्थोवापश्चाज्जातस्तदाशिशुः ॥ २॥ क्षपाकरःपश्यतिनैवलग्नंविदेशसंस्थेजनकेप्रसूतः ॥ कुजार्किसं
सर्गगतेविलग्नेकवीज्यकेंद्रांशविहीनकेवा ॥ ३॥ रविशशियुतोसिंहलग्नेकुजार्कीनिरीक्षितेनयनरहितःसौम्यैःसद्बुदलोचनः ॥ व्य
यगृहगतश्चंद्रोवामहीनस्त्यपरंरविर्नशुभागादितायोगाभवंतिशुभेक्षिताः ॥४॥ ॥इत्यरिष्टयोगप्रकरणं॥ ॥अथधनभावः॥ ॥
पापाःसर्वेधनस्थानेधनहानिकरामताः ॥ अन्यैःसौम्यैःशुभंसर्वमृद्धिर्वृद्धिधनादिकं ॥१॥ क्रूराच्चतुर्थकेंद्रेषुतथाक्रूरोधनेपिच ॥ दरि
द्रयोगंविजानीयात्स्वपक्षस्यभयंकरः ॥२॥ अष्टमस्थोयदाभौमस्त्रिकोणेनीचगोरविः ॥ सशीघ्रमेवजातःस्याद्भिक्षार्जीवीचदुःखितः

॥ ३॥ कन्यायांचयदाराहुः शुक्रोभौमः शनिस्तथा ॥ तत्रजातस्यजायेतकुबेरादधिकंधनं ॥४॥ अर्ककेंद्रे यदाचंद्रोमित्रांशेगुरुणेक्षितः ॥
वित्तवान्ज्ञानसंपन्नोजायतेचतदानरः ॥ ५॥ स्वक्षेत्रस्थोयदाजीवोबुधःसौरिस्तथैवच ॥ तदाजातःसदीर्घायुःसंपत्तिश्चपदेपदे ॥
॥ ६॥ लग्नंलग्नेशसंयुक्तं यस्यजन्मनिजायते॥ नमुंचतिगृहंतस्यकुलस्त्रियइवश्रियः॥ ७॥ चंद्रेणमंगलोयुक्तोजन्मकालेयदाभवे
त् ॥ तस्यजातस्यगेहंतुलक्ष्मीर्नैवविमुंचति॥ ८॥ मासमध्येतुयत्संख्यदिवसेजायतेपुमान् ॥ तत्संख्यवर्षभुक्तौतुलक्ष्मीर्भवति
निश्चितं॥ ९॥ ॥इतिधनभावविचारः॥ ॥अथसहजभावः॥ ॥ पापैस्तृतीयगैःसर्वैर्बांधवैःसहितोभवेत् ॥ सौम्यैश्चभ्रातृसंयु-
क्तःकीर्तियुक्तोधनप्रियः॥ १॥ लग्नात्तृतीयभुवनेशिखिनासहचंद्रमाः॥ लक्ष्मीवान्जायतेबालोभ्रातृहीनोनसंशयः॥ २॥ आदौजातान्
रविर्हंतिपश्चाद्भौमशनैश्चरौ॥ राहुणाचउभौहंतिकेतुःसर्वनिवारकः॥ ३॥ स्वक्षेत्रस्थोयदाराहुर्धनस्थानेबृहस्पतिः॥ बुधेनचसमायुक्त-
स्तस्यबंधुत्रयंभवेत् ॥ ४॥ लग्नेचंद्रोधनेशुक्रोव्ययेचबुधभास्करौ॥ राहुश्चेत्पंचमेबालःसभवेद्बहुबंधकृत् ॥ ५॥ धनस्थानेयदाक्रूरोभौमः
सौरिसमन्वितः॥ सहजेचभवेद्राहुर्भ्रातातस्यनजीवति ॥ ६॥ षष्ठेचभुवनेभौमःसप्तमेराहुसंभवः॥ अष्टमेचयदासौरिर्भ्रातातस्यनजी
वति॥ ७॥ विलग्नस्थोयदाजीवोधनेसौरिर्यदाभवेत् ॥ राहुश्चसहजेस्थानेभ्रातातस्यनजीवति॥ ८॥ सप्तमेभुवनेभौमश्चाष्टमेपिसितो
यदि॥ नवमेचभवेत्सूर्यःस्वल्पायुश्चसमूर्जितः॥ ९॥ तस्यभ्राताभवेदन्यःपिताचायंसमुद्धरेत् ॥ तस्यचैकोभवेत्पुत्रः सोपिविघ्नंविनश्यति॥

॥१०॥ उदयतिमृदुभांशौसप्तमस्थोपिमंदेयदिभवतिनिषेकःसूतिमब्दत्रयेण॥ शशिनितुविधिरेषाद्वादशाब्देप्रकुर्यान्निगदितमतिचिंत्यंसूति-
कालेपियुक्त्या॥११॥पुंग्रहोच्चस्थितोयस्यपत्रिकायांनरस्यच॥तस्यषष्ठोभवेद्भ्राताचान्यथाभगिनीभवेत्॥१२॥ ॥इतिसहजभावः॥ ॥अथ
सुखभावफलं॥ ॥तुर्यस्थानेस्थिताःपापाबालत्वेमातृकष्टदाः॥सौख्यंसौम्याःप्रकुर्वंतिराजसन्मानदायकाः॥१॥लग्नाच्चतुर्थगःपापोयदिस्या
द्बलवत्तरः॥तदामातृवधंकुर्यात्केंद्रेवानपरोयदि॥२॥द्वितीयेद्वादशेस्थानेयदापापोव्यपोहति॥तदामातुर्भयंविंद्याच्चतुर्थेदशमेपितुः॥३॥पा
पमध्यगतेलग्नेचंद्रेवापापसंयुते॥सोमेनिधनगेपापेमातृहासप्तवासरे॥४॥चतुर्थेहन्यतेमातादशमेचतथापिता॥सप्तमेभुवनेक्रूरास्त-
स्यभार्याविपद्यते॥५॥शन्यंगारकमध्यस्थोसूर्यःकुर्यात्पितुर्वधं॥मध्येवारजनीनाथोमातामरणंनसंशयः॥६॥चंद्राद्दष्टमगेपापेचंद्रेपापस
मन्विते॥पापैर्बलिष्ठैःसंदृष्टःसद्योभवतिमातृहा॥७॥लग्नस्थानेयदाजीवोधनस्थानेशनैश्चरः॥राहुश्चसहजेस्थानेमातातस्यनजीवति॥८॥
सिंहेभौमस्तुलासौरिःकन्यायांवासितोभवेत्॥मिथुनेचयदाराहुर्जननीतस्यनश्यति॥९॥चंद्रःपापग्रहैर्युक्तश्चंद्रोवापापमध्यगः॥चंद्रात्सप्त
मगःपापस्तदामातृवधोभवेत्॥१०॥एकादशेयदाक्रूरःपंचमेशुक्रशीतलौ॥प्रथमंकन्यकाजातामातातस्यास्तुकष्टगा॥११॥धनेराहुर्बुधःशु
क्रःसौरिःसूर्योयदाग्रहाः॥तदामातुर्भवेन्मृत्युर्मृतौयंपरिजायते॥१२॥नीचस्थानगतेचंद्रेतिष्ठेद्वैभार्गवात्मजः॥पापासक्तोमहाक्रोधीमातात
स्यनजीवति॥१३॥द्वादशेरिपुभावेचयदापापग्रहोभवेत्॥तदामातुर्भयंविंद्याच्चतुर्थेदशमेपितुः॥१४॥त्रिःसप्तमोदिवानाथोजन्मस्यश्चमही

सुतः॥ तस्यमातानजीवेतवर्षमेकंपलद्वयं॥१५॥लग्नेचद्वादशेस्थानेयदिपापग्रहोभवेत्॥ तस्यमाताभवेद्वंध्यापितातस्यनजीवति॥१६॥द्यू
नाष्टमगतेपापेक्रूरग्रहनिरीक्षिते॥जनन्यासहमृत्युःस्याद्वालकस्यनसंशयः॥१७॥ ॥इतिसुखभावफलं॥ ॥अथसुतभावः॥पंचमस्थाःशु
भाःसर्वेपुत्रसंतानकारकाः॥ क्रूराःसंततिमृत्यूचकुपुत्रंचधरासुतः॥१॥ बालस्यजन्मकालेतुपंचमोधरणीसुतः॥अपुत्रश्चभवेद्वालोनारी
चैवविशेषतः॥२॥अपुत्रीकुरुतेभानुःपुत्रमेकोनिशाकरः॥सशोकंपुत्रहीनंचपंचमोधरणीसुतः॥३॥उच्चोवायदिवानीचोपंचमःशिखिना
स्थितः॥हाहाकारंचकुरुतेपुत्रशोकेनपीडितः॥४॥ ऋतुरेतोअदृष्टोवायदिचैकोनपश्यति॥ अप्रसूतोभवेत्पुरुषःपरिणयोद्वित्रिचतुस्त्रियः
॥५॥ एकत्रिपंचपुत्राणिसूर्येधीस्थेकुजेगुरौ॥ द्वि२त्रि३पंचच५सप्तैव७पुत्रींदौज्ञसितेशनिः॥६॥पापाःपंचमराशौजातंजातंशिशुंविनाशयति
॥सप्तमराशौपापाद्भार्यैबादरायणेनोक्तं॥७॥एकपुत्रोरवौवाच्यश्चंद्रेचैवसुताद्वयं॥भौमेपुत्रास्त्रयोवाच्याबुधेपुत्रीचतुष्टयं॥८॥गुरौगर्भेसु
ताःपंचषट्पुत्र्योभृगुनंदने॥शनौचगर्भपातःस्याद्राहौगर्भोभवेन्नहि॥९॥सुतस्थानेद्विपापौवात्रिपापाश्चात्रसंस्थिताः॥तदास्त्रीपुरुषौवं
ध्यौविज्ञेयौस्फुतवीक्षिते॥१०॥ऋतुश्चकथितःशुक्रोरेतोभौमःप्रकीर्तितः॥यद्दृष्टेपश्यतेभौमोतदृष्टेगर्भसंस्थितः॥११॥ऋतुरेतश्चसंपर्को
जायतेविषमागतिः॥करसंपुटमादायवंध्याभवतिनिश्चितं॥१२॥ पुंराशौलग्नपतिःस्फुताधिकंवीक्षतेवापि॥ संततिबाधांकुरुतेकेंद्रेपापान्वि
तेचंद्रे॥१३॥लग्नात्पुत्रकलत्रभेशुभपतिःप्राप्तेथवालोकितेचंद्राद्वायदिसंपदस्तुहितयोज्ञेयोयथासंभवः॥ पापेनोदयगेरवौरविस्फुतेमीन

स्थितेदारहापुत्रस्थानगतश्चपुत्रमरणंपुत्रोवनेयच्छति ॥१४॥ लग्नद्वितीयेयदिवातृतीयेविलग्ननाथेप्रथमः सुतः स्यात् ॥ तुर्यस्थितेस्मिं
श्चसुतोद्वितीयः पुत्रीसुतोवेतिपुरः प्रकल्प्यं ॥१५॥ धनस्थानेयदाक्रूरः क्रूरग्रहसमन्वितः ॥नपश्यतिनिजक्षेत्रमल्पपुत्रस्तदाभवेत्
॥१६॥ सहजेसहजाधीशोलग्नेवाथधनेभवेत् ॥जायतेनतदाबालोयदिजातोनजीवति ॥१७॥ यावत्संख्याइतिकाव्यंनवांशकस्थानेलि
खितमस्तिपूर्वं ॥ झषधनुर्धरपंचमभावगेप्रसवसौख्यफलंनचदृश्यते ॥ मृतप्रजः खलुपंचमगेगुरौतदिहदृष्टिफलंशुभमश्नुते ॥१८॥ ला
भेसुतेवाशुक्रेंदुसुतेभौमोथवाक्रमात् ॥ शुक्रेंदूपश्यतः पुत्रंवर्षेस्मिन्संततिस्तदा ॥१९॥ यत्रचैकादशेराहुः पंचमेचशिखीस्थितः ॥ सुता
ननंनदृश्येतयदींद्रोपिचसेव्यते ॥२०॥५॥ ॥अथरिपुभावः॥ ॥षष्ठेक्रूरानरंकुर्युः शत्रुपक्षविवर्जितं ॥ सौम्याः षष्ठामहारोगान्षष्ठ
श्चंद्रश्चमृत्युदः ॥१॥ ॥इतिरिपुभावः॥६॥ ॥अथजायाभावविचारः॥ ॥भार्यायांसप्तमेपापाः सौम्याः सर्वजनप्रियाम् ॥गुरु
शुक्रौशचीतुल्यांरूपलावण्यशालिनीं ॥१॥ षष्ठेचभुवनेभौमः सप्तमेसिंहिकासुतः ॥ अष्टमेचयदासौरिर्भार्यातस्यनजीवति ॥२॥ जा
याभावेसौरिशशीचराहुर्जायापतिः पश्यतिसौख्यबाल्यं ॥ तस्यगृहेसंभवतीहनारीश्यामाचगौरीबहुपुत्रिणीच ॥३॥ लग्नेव्ययेचपा
तालेजामित्रेचाष्टमेकुजः ॥ कन्याभर्त्तुर्विनाशायभर्त्तुः कन्याविनश्यति ॥४॥ लग्नंपापग्रहंगौरीदुर्बलः शत्रुपीडितः ॥ भवेद्दुर्वाच्यतायुक्तोभवे
त्परवधूरतः ॥५॥ लग्नाद्व्ययेवारिपुमंदिरेवादिवाकरेंदूभवतस्तदानीं ॥स्यान्मानवस्यात्मजएकएवभार्याप्रियैकेतिवदंतिसंतः ॥६॥ गंडां

नकालेचकलत्रभावेभृगोःसुतेलग्नगतेर्कजातः॥ वंध्यापतिःस्यान्मनुजस्तदानींशुभेक्षितंनोभवनंसुतानां॥७॥ व्ययालयेवामदनालये
वारवलेषुबुद्धालयगेहिमांशौ॥ कलत्रहीनोमनुजस्तनूजैर्विवर्जितःस्यादितिवेदितव्यं॥८॥ संभूतिकालेचकलत्रभावेयमस्यभूमीतन
यस्यवर्गे॥ ताभ्यांप्रदृष्टेव्यभिचारिणीस्याद्भार्यास्वयंवैव्यभिचारकर्त्ता॥९॥ शुक्रेंदुपुत्रौचकलत्रसंस्थौकलत्रहीनंकुरुतेनरंतौ॥ शुभे
क्षितौवावयसोविरामेकामांचरामांलभतेमनुष्यः॥१०॥ चंद्राद्विलग्नाच्चखलाःकलत्रेहन्युःकलत्रंचलयंगतास्तौ॥ चंद्रार्कपुत्रौचकलत्रसं
स्थौपुनर्भवास्त्रीपरिलब्धिदौस्तः॥११॥ महीसुतेसप्तमभावयातेकांतावियुक्तःपुरुषस्तदास्यात्॥ मंदेनदृष्टेम्रियतेचिरात्तदासूर्येण
दृष्टेबहुदुःखपीडितः॥१२॥ षष्ठेचभुवनेभौमःसप्तमेराहुसंभवः॥अष्टमेचयदासौरिस्तस्यभार्यानजीवति॥१३॥ ॥इतिजायाभाव
फलं॥ ॥अथायुर्भावविचारः॥ ॥पूर्वमायुःपरीक्षेतपश्चाल्लक्षणमादिशेत्॥ आयुर्हीननराणांचलक्षणैःकिंप्रयोजनम्॥१॥ खेटाः
सर्वेमहादुष्टाअष्टमस्थानमाश्रिताः॥ शशांकस्तुविशेषेणजन्मकालेचमृत्युदः॥२॥ कृष्णपक्षेदिवाजातःशुक्लपक्षेयदानिशि॥ तदाष
ष्ठाष्टमश्चंद्रोमातृवत्परिपालकः॥३॥ पंचमस्थोनिशानाथस्त्रिकोणेचबृहस्पतिः॥ दशमेचमहीसूनुःशतवर्षंसजीवति॥४॥ शनैश्च
रस्तुलाकुंभमकरेयदिवाभवेत्॥ लग्नेषष्ठेतृतीयेवातदारिष्टंनजायते॥५॥ राहुर्वृषेत्रिभिर्दृष्टेकेतुर्दृष्टेचतुष्टये॥ वृषेचगुरुशुक्राभ्यांदी ६५
र्घकालंसजीवति॥६॥ केंद्रेशुभौयदैकोपिबलीविश्वाप्रकाशकः॥ सर्वेदोषाःक्षयंयांतिदीर्घायुश्चभवेन्नरः॥७॥ एकोपिकेंद्रेबुधजीवशु

काः क्रूराः सहस्राणि विरुद्धयुक्ताः ॥ तथापि सर्वाण्यपि यांति नाशं यथा मृगाः केसरिदर्शनेन ॥ ८ ॥ पाताले वांबरे लग्ने सुते धर्मे तथायगे ॥
देवेगुरुस्तथा शुक्रो नाशयेद्दुरितं बहु ॥ ९ ॥ एकोपि केंद्रे यदि उच्चसंस्थः सर्वे ग्रहा भावगुणेन तुल्यं ॥ सर्वेप्यरिष्टं च विनाशयंति तमो यथा भा
स्करदर्शनेन ॥ १० ॥ शुक्रो दश सहस्राणि बुधो दश शतानि च ॥ लक्षमेकं तु दोषाणां गुरुर्लग्ने व्यपोहति ॥ ११ ॥ केंद्रत्रिकोणगो जीवो शुक्रो वा
चंद्रनंदनः ॥ तस्य पुरुषस्य दीर्घायुः स भवेद्राजवल्लभः ॥ १२ ॥ गुरुर्धनुषि मीने वा तथा कर्कटकेपि वा ॥ लग्नात्त्रिकोणकेंद्रे वा तदारिष्टं न जा
यते ॥ १३ ॥ अजवृषककर्कटलग्ने रक्षति राहुः समग्रपीडाभ्यः ॥ पृथ्वीपतिः प्रसन्नः कृतापराधं यथा पुरुषं ॥ १४ ॥ राहुस्त्रिषष्ठलाभे लग्नात्
सौम्यैर्निरीक्षितः सद्यः ॥ नाशयति सर्वदुरितं मारुत इव तूलसंघातं ॥ १५ ॥ विलग्नपो यत्र बलेन युक्तो लाभे तृतीये यदि कंटके वा ॥ सर्वाण्य
रिष्टानि प्रयांति दूरं दीर्घायुरारोग्यतनुं करोति ॥ १६ ॥ एकोपि यदि केंद्रस्थो भार्गवोथ गिरांपतिः ॥ नवमे वा स्वकृतस्थाने सर्वारिष्टं निवारये
त् ॥ १७ ॥ बुधभार्गवजीवानामेकतमः केंद्रमाश्रितो बलवान् ॥ क्रूरः सहायो यद्यपि सद्योरिष्टप्रशमनाय ॥ १८ ॥ स्वस्थानगोधिकबलः
सुरराजमंत्री केंद्रोपगः प्रशमयेत् स्फुरदंशुजालः ॥ एको बहूनि दुरितानि सुदुस्तराणि भक्त्या प्रयुक्त इव शूलधरे प्रणामः ॥ १९ ॥ लग्नाधि
पोतिबलवान्किल सौम्यदृष्टः केंद्रस्थितैः शुभखगैरथ वीक्ष्यमाणः ॥ मृत्युं विहाय विदधाति सुदीर्घमायुः संपूर्यते निजगृहं परया च
लक्ष्म्या ॥ २० ॥ लग्नादष्टमसंस्थो गुरुबुधशुक्रद्रेष्काणगश्चंद्रः ॥ मृत्युप्राप्तमपि नरं परिरक्षंत्ययुतबालं ॥ २१ ॥ चंद्रः संपूर्णतनुः सौ

म्यर्क्षगतोथवाशुभस्यांते ॥ प्रकरोत्यरिष्टभंगंविशेषतः शुक्रसंदृष्टः ॥२२॥ रिपुगः शुभद्रेष्काणेस्थितः शशीसौम्याः खचराः सब-
लाः॥ कुर्वंत्यरिष्टभंगंविशेषंयथावसुधांचलुकः॥२३॥ सौम्येद्वयांतर्गतः संपूर्णस्निग्धमंडलश्चंद्रः ॥ भुनक्त्यशेषारिष्टान् भुजगारि-
र्भुजगलोकमिव ॥२४॥ प्रस्फुरितकिरणजालेस्निग्धामलमंडलेबलोपेताः॥ सुरमंत्रिणिकेंद्रगतेसर्वारिष्टंक्षयंयाति ॥२५॥ सौम्या
नां भुवनगताःसौम्यांशकसंभवद्रेष्काणस्थाः॥ गुरुचंद्रकाव्यशशिजाः सर्वारिष्टमस्यहंतारः॥२६॥ चंद्रोपाशितराशितपकेंद्रेशु
भग्रहोवापि ॥ प्रकरोत्यरिष्टभंगंपापानियथाशिवस्मरणं ॥२७॥ पापायदिशुभवर्गेसौम्यैर्दृष्टाः शुभांशवर्गस्थैः ॥ निघ्नंतिसदारि
ष्टंपतेर्विरक्तायथायुवतिः॥२८॥ शीर्षोदयेषुराशिषुसर्वेगगनाधिवासिनोधिगताः॥ प्रतिहंतिसर्वदुरितंयथाघृतंवाग्निसंयोगात्॥२९
॥ तत्कालयुद्धविजयीशुभग्रहः शुभनिरीक्षितश्चापि॥ नाशयतिकष्टनिवहंवात्याइवपादपंसकलं॥३०॥ गगनविभूषणसौम्यैर्दृ
ष्टोनाशयतिसर्वदुरितानि॥ संपूर्णमूर्तिरुडुपोदुर्नयनःखंयथानाशं॥३१॥ उदयोसप्तमुनीनांतथागस्त्यपुनरपिविलीयते॥ तदारिष्टं
नवशीतिमिवापापैरवीर्यैश्चशुभैःसवीर्यैः॥३२॥ शुभराशौतनुभावयानिरीक्षितेव्योमचरैः शुभाख्यैः॥ संक्षीयतेरिष्टंसुखागतांहि॥
॥३३॥ मूर्तेस्तुराहुस्त्रिषडायवर्तीरिष्टंहरत्येवशुभैःप्रदिष्टः॥ शीर्षोदयस्थैर्विकृतिंनयातिसमस्तखेटैःखलुरिष्टभंगः॥३४॥ तत्रत्यये
लाभारिपुत्रिसंस्थः केतुस्तुहेतुर्निधनोपशांत्यै॥ परस्परंभार्गवजीवसौम्यास्त्रिकोणगास्तेपिहरंत्यरिष्टं॥३५॥ संध्याभवावेध्वतिपा

नभद्रगंडांतयुक्तायदिजन्मकाले ॥ भवंत्यरिष्टस्यविनाशनार्थंनिरंतरादस्यदलेचसर्वे ॥ ३६ ॥ चतुष्टयेश्रेष्ठबलाधिशालीशुभोनभो
गोष्टमगोनकश्चित् ॥ विंशान्मितायुःप्रकरोतिनूनंदशान्वितंतच्छुभखेटदृष्टः ॥ ३७ ॥ निजत्रिभागेस्वगृहेगुरुश्चेदायुर्गतिःस्यात्खलुविंश
विंशत् ॥ बृहस्पतिस्तुंगगतोविलग्नेभृगोःसुतोकेंद्रगतेशतायुः ॥ ३८ ॥ लग्नेस्वतुंगेबलशालिनींदौसौम्याःशुभस्थाःखलुषष्ठिरायुः ॥
मूलत्रिकोणेषुशुभेषुतुंगेलग्नेगुरावायुरशीतिरेव ॥ ३९ ॥ लग्नेष्टमारेंदुयुतानचेत्स्युःक्रूराःशुभस्थायदिखेचरेंद्राः ॥ बलान्वितावंचर
ताभवेत्तांजातःशतायुःकथितोमुनींद्रैः ॥ ४० ॥ शून्येरंध्रैःक्रूरगैःसौम्यखेटैर्लग्नेजीवेनैधनेहृदयश्चेत् ॥ नोसांदिष्टाःपापखेटैःसदा-
स्यादायुर्मानंससातिर्वत्सराणां ॥ ४१ ॥ भानोरग्निभयंशशांकमुदकेभौमेमृतिरायुधैःसौम्येकष्टज्वरंमहांतविषमेरामाचहस्तेगुरौ
॥ शुक्रेवात्यक्षुधात्रिपारविसुतेमृत्युर्भवेत्सर्वदासर्वेंतेमरणंकरोतिसततंस्थानेस्थितेचाष्टमे ॥ ४२ ॥ दशमेपंचमेजीवोबुधश्चंद्र
श्चभार्गवः ॥ शतंजीवीभवेज्जातोधनाढ्योवेदपारगः ॥ ४३ ॥ नवमेपंचमेजीवोबुधेभवतिसप्तमः ॥ लग्नेभार्गवशुक्रौचशतंजीवीभ
वेन्नरः ॥ ४४ ॥ ॥ अथलघुजातकरीत्यागतिविचारोलिख्यते ॥ ॥ सूर्यादिभिर्धनगैर्हुतवहसलिलायुधक्षुरामयजः ॥ क्षुत्तृट्कृतश्चमृ
त्युःपरदेशेनैधनेचरभे ॥ ४५ ॥ योवाबलवान्निधनंपश्यतितद्धातुकोपजोमृत्युः ॥ लग्नेत्रिंशांशपतिर्द्वाविंशतिहायनेमृत्युः ॥ ४६ ॥ वि
बुधापितृतिरश्चोनरकान्गुरुरिंदुसितौच ॥ स्वग्रवीन्यमौरिपुरंध्रंत्रिंशपानयंतिविस्तारंनिधनस्थाः ॥ ४७ ॥ षष्ठाष्टमकंटकगोगुरुरुच्चे

भाविमीनलग्नेवा ॥ शेषैरवलैर्जन्मनि मरणेवामोक्षगति माहुः ॥ ४८ ॥ गुरुरुडुपतिशुक्रौसूर्यभौमौयमज्ञौविबुधपितृतिरश्चोनारका यांश्वकुर्युः ॥ दिनकरशशिवीर्याधिष्ठितत्र्यंशनाथात् प्रवरसमनिकृष्टास्तुंगमासादनूके ॥ ४९ ॥ स्थिरश्चरोद्व्यंगसमाहृयश्चराशिर्यदाजन्मनिचाष्टमस्थः ॥ स्वकीयदेशेविषयांतरेवाआयुः प्रकुर्यान्मरणक्रमेण ॥ ५० ॥ आयुर्व्ययंरवेद्रूविवर्जितंचेद्विलोकयेत्तद्बलवान्व्ययेंदुः ॥ तद्धेतुजातं प्रवदंति मृत्युंबहुप्रकारंबहवोबलिष्ठाः ॥ ५१ ॥ पित्तंकफःपित्तमथत्रिदोषश्लेष्मानिलोवाप्यनिलःक्रमेण ॥ सूर्यादिकेभ्योमरणस्यहेतुः प्रकल्पितः प्राक्तनजातकज्ञैः ॥ ५२ ॥ ॥ इत्यष्टमभावेऽरिष्टभंगप्रकरणं ॥ ८ ॥ ॥ अथनवमभावफलं ॥ ॥ विहायसर्वंगणकैर्विचिंत्यं भाग्यालयंकेवलमत्रयात्नात् ॥ आयुश्चमाताचपिताचबंधुर्भाग्यान्वितेनैवभवंति धन्याः ॥ ॥ १ ॥ यस्यास्तिभाग्यंसनरःकुलीनःसपंडितःसश्रुतवान्गुणज्ञः ॥ सएववक्तासचदर्शनीयोभाग्यान्वितःसर्वगुणैरुपेतः ॥ २ ॥ ॥ अथभाग्योदयलक्षणं ॥ ॥ द्वाविंशेरविप्राचवर्षंकथितंचंद्रेचतुर्विंशति अष्टाविंशतिभूमिनंदनमतंदातुर्बुधेचस्मृतं ॥ जीवेषोडशभृगौपंचविंशतितथाषट्त्रिंशसौरीवदेत्कर्मेशात्खलुकर्मचैवकथितंलग्नाधिपोचेत्स्मृतं ॥ ३ ॥ भाग्ययोभ्यंतरेसौरिःस्थितोजन्मयथाभवेत् ॥ लग्नपेतुविशेषेणयावज्जीवसमृद्धिमान् ॥ ४ ॥ मूर्तेश्चापिनिशापतेश्चनवमंभाग्यालयंकीर्तितंतत्स्वस्वामियुतेक्षितंप्रकुरुतेभाग्यंचदेशोद्भवं ॥ चेदन्येविषयांतरैश्चशुभदाःस्वोच्चादिगाःसर्वदाकुर्युर्भाग्यमसाधवोनचबलाद्दुःखोपलब्धिंपरां ॥ ५ ॥ भाग्येश्व

रोभाग्यगतोस्तिकिंवास्वस्थानगाः सारविराजमानः॥ भाग्याश्रितः कोस्तिविचारसर्वमनल्पमल्पंपरिकल्पनीयम्॥६॥ तनुत्रिसूनूपग
तोग्रहश्चेद्योवाधिवीर्योनवमंप्रपश्येत्॥ यस्यप्रसूतौसतुभाग्यशालीविलासशीलोबहुलार्थयुक्तः॥७॥ चेद्भाग्यगामीखचरःस्वगेहेसौ
म्येक्षितोयस्यनरस्यसूनौ॥ भाग्याधिशालीस्वकुलावतंसोहंसोयथामानसराजमानः॥८॥ पूर्णेंदुयुक्तौरविभूमिपुत्रौभाग्यस्थितौ
जीवसमन्वितौच॥ वंशानुमानंसचिवंनृपंवाकुर्वंतितेसौम्यदशाविशेषात्॥९॥ स्वोच्चोपगोभाग्यगृहेनभोगेनरस्ययोगंकुरुतेचल
क्ष्म्या॥ सौम्येक्षितोसौयदिभूमिपालंदंतावलोत्कृष्टविलासलाभं॥१०॥ ॥इतिभाग्यभावः॥९॥ ॥अथदशमभावफलं॥ ॥समु
दितमृषिवर्यैर्मानवानांप्रयत्नादिहहिदशमभावेसर्वकर्मप्रकामम्॥ गगनगपरिदृष्ट्याराशिखेटः स्वभावःसकलमपिविचिंत्यंसत्वयो
गात्सुधीभिः॥१॥ ततःसकाशाद्दशमेशशांकेवृत्तिर्भवेत्तस्यनरस्यनित्यम्॥ नानाकलाकौशलवाग्विलासः सर्वाधर्मैःसाहसकर्मभिश्च
॥२॥ ततःशशांकाद्दशमेबलीयान्स्याज्जीवनंतस्यखगाख्यवृत्या॥ बलान्विताद्दर्षपतेस्तुयद्वावृत्तिर्भवेत्तस्यखगस्यपाके॥३॥ दिवामणिः
कर्मणिचंद्रतोवाद्रव्याप्यनेकोद्यमवृत्तियोगात्॥ सत्वाधिकत्वंचसदासुरम्यंपटुत्वमंगेमनसःप्रसादः॥४॥ लग्नेंदुतत्कर्मणिचेन्महीजः-
स्यात्साहसाच्चौर्यनिषादवृत्तिः॥ नूनंनराणांविषयातिशक्तिर्दूरेनिवासःसहसाकदाचित्॥५॥ लग्नेंदुभ्यांकर्मगोरौहिणेयःकुर्याद्दिव्यंनामकलं
बहूनां॥ शिल्पेभ्यासःसाहसंसर्वकार्येविद्वद्वृत्याजीवनंमानवानाम्॥६॥ विलग्नतःशीतमयूखरश्मितोदृष्टेमघोनःसचिवोयदिस्यात्॥ नाना

धनान्यागमनानिपुंसांविचित्रविद्यानृपगौरवंच॥७॥ होरायाश्चनिशाकराङ्गगुसुतोमेषूरणेसंस्थितोनानाशास्त्रकलाकलापविलसद्वृत्यादिस
ज्जीवनं॥दानेसाधुनिवैयथाविनयतांकामंधनाभ्यागमंनानामानवनायकादिविकलंशीलंविशालंयशः॥८॥होरायाश्चसुधाकराद्रविसुतः
शैलूषमध्यास्थितोवृत्तिंहीनतरांनरस्यकुरुतेकार्श्यंशरीरेसदा॥खेदंवादभयंचधान्यधनयोर्हानिंस्वमुच्चैर्मनश्चित्तोद्वेगसमुद्भवेनचपलंशीलंच
नोनिर्मलं॥१०॥जीवोद्विजात्माकरदेवधर्मैःशुक्रोमहिष्यादिकरोप्यरत्नैः॥शनैश्चरोनीचनरप्रकारैःकुर्यान्नराणांखलुकर्मवृत्तिः॥११॥कर्मस्वा
मीग्रहोयस्यनवांशेपरिवर्तते॥तत्तुल्यकर्मणावृत्तिंनिर्दिशंतुमनीषिणः॥१२॥दशारिगेहोपगतेर्नभोगैस्ततस्ततोर्थःपरिकल्पनीयः॥तुंगेपतंगेस्व
गृहेत्रिकोणेस्यादर्थसिद्धिर्निजबाहुवीर्यात्॥१३॥बुधभार्गवजीवार्कियुक्तोराहुश्चतुष्टये॥कुरुतेकमलारोग्यंपुत्रमानादिकंफलं॥१४॥कर्मस्थाने
निजक्षेत्रेभौमशुक्रबुधैर्युतः॥यदिराहुर्भवेत्तस्यक्षणेवृद्धिःक्षणेक्षयः॥१५॥पातालेचांबरेपापोद्वादशेचयदास्थितः॥पितरंमातरंहंतिदेशाद्देशां
तरंव्रजेत्॥१६॥चापेसूर्यशनीकुंभेमेषेभवतिचंद्रमाः॥मकरेचयदाशुक्रोभुंक्तेनाशंपितुर्धनं॥१७॥सप्तमेभुवनेभानुर्मध्यस्थोभूमिनंदनः॥
राहुश्चांतेचतस्यैवपिताकष्टेनजीवति॥१८॥कन्यायामिथुनेराहुःकेंद्रेषष्ठेव्ययेभवेत्॥त्रिकोणेचतदाजातोदाताभोक्तानिरामयः॥१९॥सूर्यःपा
पेनसंयुक्तःसूर्यश्चपापमध्यगः॥सूर्यात्सप्तमगःपापस्तदापितृवधोभवेत्॥२०॥दशमस्थोयदाभौमःशत्रुक्षेत्रस्थितोयदि॥म्रियतेतस्य
बालस्यपिताशीघ्रंविनश्यति॥२१॥लग्नेजीवोधनेमंदोरविर्भौमस्तथाबुधः॥विवाहसमयेतस्यबालस्यम्रियतेपिता॥२२॥भ्रातृस्था

नेयदाजीवोलाभस्थानेयदाशशी ॥ सलोकेगृहमध्यस्थोजायतेकुलदीपकः ॥ २३ ॥ सिंहलग्नेयदाभौमःपंचमेचनिशाकरः ॥ व्ययस्थाने
यदाराहुःसजातःकुलदीपकः ॥ २४ ॥ एकःपापोयदालग्नेपापश्चैकोरसातले ॥ जायतेचाहिनालीस्यात्सजातःकुलदीपकः ॥ २५ ॥ लग्ने
वासप्तमेभौमःपंचमेचदिवाकरः ॥ व्ययस्थानेयदाराहुर्विख्यातःसनसंशयः ॥ २६ ॥ केंद्रेशुभेयदेकोपिबलोविश्वप्रकाशकः ॥ सर्वदोषाःक्ष
यंयांतिर्दीर्घायुश्चभवेन्नरः ॥ २७ ॥ ॥ इतिदशमभावः ॥ ॥ अथएकादशमलाभभावोनिरूप्यते ॥ ॥ लाभस्थानेग्रहाःसर्वेराज्य
लाभफलप्रदाः ॥ गजाश्वपतिसीप्संचसोम्याःकुर्वंतिनिश्चितं ॥ १ ॥ सूर्येणयुक्तःस्वविलोकितोवालाभायतेतस्यगुणोत्रवेशात् ॥ भूपालत
श्चौरकुलात्कुलेवाचतुष्पदादेर्बहुधाधनाप्तिः ॥ २ ॥ चंद्रेणयुक्तंचविलोकितंवालाभालयंचंद्रग्रहाश्चयंचेत् ॥ जलाशयस्त्रीगजवाजिवृद्धिः
पूर्णोभवेत्क्षीणततोविलोमात् ॥ ३ ॥ लाभायतेमंगलयुक्तदृष्टेप्रकृष्टभूषामणिहेमलब्धिः ॥ विचित्रयात्राबहुसाहसोस्यात्नानाकलाकोमल
बुद्धियोगेः ॥ ४ ॥ लाभेसौम्यगणाश्रितेशशियुतेसौम्येचसद्वीक्षितेनानाकाव्यकलाकलापविधिनाशिल्पेनलिप्यासुखं ॥ युक्तिद्रव्यमयोभवे
द्धनचयःसत्साहसैरुद्यमैर्द्रव्यंचापिवणिग्जनैर्बहुतरंक्लीवेनृणांकीर्तितं ॥ ५ ॥ यज्ञक्रियासाधुजनानुयातोराजाश्रितोत्कृष्टरूपोनरःस्यात् ॥ द्र
व्येणहेमप्रचुरेणयुक्तोलाभेगुरोर्वर्गनिरीक्षणंचेत् ॥ ६ ॥ लाभालयेभार्गववर्गयातेयुक्तेक्षितंवायदिभार्गवेण ॥ वेश्याजनैर्वापगमागमैर्वासद्रौप्य
मुक्ताप्रचुरस्यलब्धिः ॥ ७ ॥ लाभवेश्मनिशनीकृतयुक्तःसद्गुणेनसहितेसतिपुंसां ॥ नीललोहमहिषीगजलाभोग्रामवृंदपुरणोरवमित्थं ॥ ८ ॥ युक्तेक्षि

तेलाभगृहेशुभाख्येवर्गेशुभानांसमवस्थितेच॥लाभोनराणांबहुधाथवास्मिन्सर्वैर्ग्रहैर्युक्तनिरीक्षमाणे॥९॥ ॥इतिलाभभावः॥ ॥अथ
व्ययभावः॥ ॥कुशीलंचतथाकाणंपापिनंदुःखिनंनरं॥महाव्ययंमहादुष्टंव्ययभावादयोग्रहाः॥१॥व्ययालयेक्षीणकरःकलानांसूर्योथवाह्वा
वपितत्रसंस्थौ॥द्रव्यंहरेद्भूमिपतिस्तुतस्यव्ययालयेबाहुजदृष्टियुक्ते॥२॥पूर्णेंदुसौम्येज्यसिताव्ययस्थाःकुर्वंतिसंस्थांधनसंचयस्य॥प्रांत्यस्थिते
सौम्यसितेंदुजेनयुक्तेक्षितेवित्तविनाशनंस्यात्॥३॥ ॥इतिव्ययभावः॥१२॥ ॥अथद्वादशभावफलं॥ ॥अथाग्रेशेषश्लोकाःलिख्यंते॥ ॥उ
च्चाभिलषीग्रहयोगःजन्मकालेपतंतिच॥सनरोभूपपूज्यःस्याद्वंशस्यनृपतिर्भवेत्॥१॥ रवौमीनेशशीमेषेभौमेशफरमुदाहृतं॥सिंहेबुधेगुरौ
मिथुनेशुक्रःकुंभेतथैवच॥२॥कन्येशनिःप्रकुर्वीतउच्चाभिलाषीप्रकीर्तितः॥३॥ ॥इतिउच्चाभिलाषी॥ ॥अथसबलनिर्बलग्रहपरिज्ञा
नं॥ ॥उदितःस्वगृहस्थश्चमित्रगेहेस्थितोपिच॥मित्रवर्गेणदृष्टश्चसग्रहःसबलःस्मृतः॥१॥स्वामिनाबलिनादृष्टिःसबलैश्चशुभैर्ग्रहैः॥
नदृष्टोनयुतःपापैःसलग्नःसबलःस्मृतः॥२॥ ॥अथसर्वग्रहाणांदृष्टिः॥ ॥ज्ञार्केंदुशुक्रास्त्रिदशांत्रिकोणंतुर्याष्टमंद्यूनमथांशदृष्ट्या
॥पश्यंतितुर्याष्टमसप्तमस्थंदशंत्रिकोणंचगुरुक्रमेण॥१॥त्रिकोणंचतुरस्रंचसप्तमंत्रिदशांशनिः॥अस्तंत्रिरवंत्रिकोणंचचतुरस्रंक्रमात्कुजः
॥२॥विषमस्तंचतुरस्रंत्रिकोणंतदपश्यति॥वक्रदृष्टिंविजानीयाज्ज्योतिःशास्त्रविशारदैः॥३॥आयेव्ययेनपश्यंतिनपश्यंतिद्वितीयके॥मू-
र्तौग्रहानपश्यंतिषष्टिजात्यंधकोग्रहः॥४॥ ॥इतिग्रहाणांदृष्टिः॥ ॥अथजन्मपत्रिकानामानि॥ ॥तिथिवारंचनक्षत्रंनामाक्षरसमन्वितं॥

वेदेनहरतेभागंशेषंनामतदुच्यते ॥१॥ व्योमाद्योमाचमूर्द्धाचपद्मायैचचतुर्थकं ॥जन्मपत्रीयदानामयोजानातिसपंडितः ॥२॥ व्योमाचपि
तृहानिःस्यात्द्योमामातृक्षयकरी ॥ मूर्द्धाश्चायुःकरीज्ञेयापद्माबलप्रदायिनी ॥३॥ ॥इतिजन्मपत्रीनाम॥ ॥शब्देमेषेवृषेसिंहेमकरेचतथा
तुले॥अर्द्धशब्दघटेकन्येशेषाःशब्दविवर्जिताः ॥१॥ ॥इतिजन्मसमयेशब्दज्ञानम्॥ ॥वामेसिंहवृषेलग्ने वृश्चिकेनालवेष्टितः॥नृलग्नेदक्षि
णेपार्श्वेस्त्रीलग्नेवामपार्श्वगः॥१॥ ॥इतिनालज्ञानम्॥ ॥शीर्षोदयेविलग्नेमूर्द्धाप्रसवोन्यथोदयेचरणौ॥उभयोदयेचहस्तौशुभदृ
ष्टःशोभनोन्यथाकष्टः॥१॥ सूर्यश्चतुष्पदस्थःशेषाद्विशरीरसंस्थिताबलिनः॥ केशैर्वेष्टितदेहोयमलोरवलुसप्रसूयते ॥२॥ क्रूरग्रहसंधिगते
शशिनिवृषेभौमसौरिसंदृष्टे॥ मूकःसौम्यैर्दृष्टेवाचंकालांतरेवदति ॥३॥ दक्षिणांगेग्रहाःसर्वेदीप्ताअस्तमितेक्षणाः॥तस्याविंशत्तमेव
र्षेगजोद्धारस्यातिष्ठति ॥४॥ चतुःसागरगेचंद्रेकोणेचैवदिवाकरे॥अपिदासकुलेजातःसोपिराजाभविष्यति ॥५॥ त्रिभिःस्वस्थैर्भवेन्मंत्री
त्रिभिरुच्चैर्नराधिपः॥ त्रिभिर्नीचैर्भवेद्दासस्त्रिभिरस्तंगतैर्जडः॥६॥ ॥इतिउच्चनीचफलं॥ ॥अथनवग्रहाणांपुरुषाकारचक्रंलिख्यते
॥लिखित्वानरचक्रंचयत्रसूर्योव्यवस्थितः॥ तन्नक्षत्रादिकंकृत्वात्रयंदद्याच्चमस्तके॥१॥ वदनेचत्रयंदद्यादेकैकंस्कंधयोर्द्वयोः॥बाहुद्वये
तथैकैकंपाणौचैकैकमेवच ॥२॥ ऋक्षाणिहृदयेपंचनाभौस्यादेकमेवहि॥ ऋक्षंगुह्येभवेदेकमेकैकंजानुनोर्द्वयोः॥ ३॥ नक्षत्राणिषडन्या
निदद्यात्पादद्वयेबुधः॥पादस्थितेचनक्षत्रेनिर्द्धनोल्पायुरेवच ॥४॥ विदेशगमनोजातोगुह्येस्यात्पारदारिकः॥अल्पतोषीभवेन्नाभौहृ

दयेचेश्वरस्तथा ॥ ५ ॥ तस्करः पाणियुग्मेचबाह्वोस्थानच्युतोभवेत् ॥ स्कंधेगजस्कंधगामीमुखेमिष्टान्नभोजनं ॥ ६ ॥ मस्तकस्थेचनक्षत्रे पट्टबंधीभवेन्नरः ॥ सूर्यनक्षत्रतोजन्मनक्षत्रमितिगण्यते ॥ ७ ॥ शतवर्षाणिजीवेतशिरसाजातोनसंशयः ॥ मुखेनाशीतिवर्षाणिस्कंधाभ्यांचतथैवच ॥ ८ ॥ हस्ताभ्यांबाहुयुग्मेचजीवतेसप्तसप्ततिः ॥ हृदयेअष्टषष्टीचनाभौचापितथैवच ॥ ९ ॥ गुह्येचषष्टिवर्षाणिचाष्टौवर्षाणिजानुनि ॥ पादयोःषट्चवर्षाणिरविचक्रेक्रमेणच ॥ १० ॥ ॥ इतिपुरुषचक्रफलं ॥ ॥ अथचंद्रपुरुषाकारचक्रं ॥ ॥ पूर्णिमायांतुयद्भंतदादौत्रीणिमस्तके ॥ मुखेत्रीणिभुजेषट्कंहृदित्रीण्युदरेत्रयं ॥ १ ॥ गुह्येत्रीणिपदेषट्कंन्यसेच्चंद्रस्यसर्वदा ॥ यावत्स्वजन्मनक्षत्रंगणनीयमितिक्रमात् ॥ २ ॥ अर्थसिद्धिर्निवृत्तश्रीकुशलमद्भुजंशुभं ॥ मार्गमृत्युंश्रियंक्षेममितिचंद्रफलंवदेत् ॥ ३ ॥ ॥ इतिचंद्रचक्रं ॥ ॥ अथमंगलपुरुषाकारचक्रं ॥ ॥ यस्मिन्नृक्षेभवेद्भौमस्तदादौत्रीणिमस्तके ॥ मुखेत्रीणित्रयंनेत्रेकंठेद्वेचचतुष्करे ॥ १ ॥ पंचोदरेत्रिगुह्येचपादेचत्वारिदापयेत् ॥ जन्मऋक्षंस्थितंयत्रफलंतत्रवदेत्सुमान् ॥ २ ॥ मुखेरोगंसुखंनेत्रेशिरोराज्यंरुजाकरे ॥ कंठेरागीधर्नावक्षेगुह्येभोगीपदेभ्रमः ॥ ३ ॥ ॥ इतिभौमचक्रं ॥ ॥ अथबुधचक्रं ॥ ॥ यस्मिन्नृक्षेभवेत्सौम्यस्तदादौचशिरेचतुः ॥ मुखेत्रीणिचतुर्वामेकरेदक्षिणकेचतुः ॥ १ ॥ उरेपंचैकंगुह्येकंत्रीणिद्वेपादेविन्यसेत् ॥ जन्मऋक्षंस्थितंयत्रफलंतत्रवदेत्पुमान् ॥ २ ॥ मुखेष्टभुक्शिरोराज्यंकष्टंवामकरेतथा ॥ वक्षेयाम्यकरेसौख्यंगुह्येरोगीपदेभ्रमः ॥ ३ ॥ ॥ इतिबुधचक्रं ॥ ॥ अथबृहस्पतिपुरुषाकारचक्रं ॥ ॥

शीर्षेचत्वारिराज्यंयुगपरिगणितास्कंधयुग्मेचलक्ष्मीरेकंकंठेविभूतिर्मदनशरमिताचक्षसिप्रीतिलाभं ॥ षड्भिःपीडांघ्रियुग्मेजलधिप
रिमितावामहस्तेचमृत्युःदक्युग्मेत्रीणिकुर्यान्नृपतिसुखमरवंवाक्पतेश्चक्रमेतत् ॥१॥ इतिगुरुचक्रम् ॥ गुरुनक्षत्राज्जन्मनक्षत्रंयाव
द्गणनीयं ॥ ॥अथशुक्रपुरुषाकारचक्रं ॥ ॥यस्मिन्ऋक्षेभवेच्छुक्रस्तदादौचचतुःशिरे ॥ कंठेचउरगेपंचत्रिगुह्येपंचजंघयोः ॥१॥
त्रीणिहृत्पदेदद्यात्फलंजन्मर्क्षयावतः ॥ शिरेराज्यंधनंकंठेहृदयेसौख्यमेवच ॥२॥ शत्रुभीतिर्भवेद्गुह्येजंघायामिष्टभोजनं ॥ पादे
चसुखसंप्राप्तिः शुक्रचक्रेक्रमेणच ॥३॥ ॥इतिशुक्रचक्रं ॥ ॥अथशनिपुरुषाकारचक्रं ॥ ॥ शनिचक्रंनराकारंलिखित्वासौरिभा
दितः ॥ नामऋक्षंभवेद्यावज्ज्ञेयंतत्रशुभाशुभम् ॥१॥ नक्षत्रमेकंचशिरोविभागेतथामुखेत्रीणियुगंचगुह्ये ॥ नेत्रेचनक्षत्रयुगंहृदिस्थंभू
पंचकंवामकरेचतुष्कं ॥२॥ वामेचपादेत्रितयंचभानांभानांत्रयंदक्षिणपादसंस्थं ॥ चत्वारिऋक्षाणिचदक्षिणेतरेपाणौप्रणीतंमुनि
नारदेन ॥३॥ रोगोलाभोहानिरानिश्चसौख्यंबंधुःपीडासत्वयाणंचलाभः ॥ मंदेवक्रीमार्गगेकल्पनीयंतद्वैलोम्याच्छीघ्रगेस्यात्फलानि
॥४॥ ॥इतिशनिचक्रं ॥ ॥अथशनिपुरुषाकारचक्रं ॥ ॥यस्मिन्शनिश्चरतिचक्रगतंनहृक्षंचत्वारिदक्षिणकरेंघ्रियुगेचषट्कं ॥ च
त्वारिवामकरणोदरेचपंचमूर्ध्नित्रयंनयनयोर्हितयंगुदेच ॥१॥ रोगोलाभस्तथाद्रव्यंलाभंबंधनमेवच ॥ पूजाचजनसौभाग्यमल्प
मृत्युःक्रमात्फलं ॥२॥ ॥इतिशनिचक्रं ॥ ॥यस्मिन्ऋक्षेभवेद्राहुस्तदादौसप्तपादयोः ॥ दक्षिणेचभुजेपंचशिरसित्रीणिदापयेत्

॥ १ ॥ द्वेऋक्षे हृदये न्यस्य मुखे चैकं नियोजयेत् ॥ पंचऋक्षं करे ज्ञेयं ऋक्षमेकं तु नाभितु ॥ २ ॥ तथैव त्रीणि गुह्ये च राहुचक्रं विधीयते ॥ ध
नहानिर्भवेत्पादौ संतापं दक्षिणे करे ॥ शीर्षे शत्रुजयं विद्यात् हृदये दुर्जनात्भयं ॥ ३ ॥ मुखे दुर्जनसंहारं मृत्युर्वामे करे भवेत् ॥ गुह्ये च




सर्वनाशः स्याद्विचार्यं हि अनुक्रमात् ॥ ४ ॥ ॥ इति राहुचक्रं ॥ ॥ शीर्षे पंच द्वे मुखे पंच कर्णे वक्षे द्वौ च वेद ४ ऋक्षं च हस्ते ॥ अंघ्रौ पंच
बस्ति चत्वारि ज्ञेयं केतोश्चक्रं प्रोदितं बुद्धिमद्भिः ॥ १ ॥ मुखे भयं मूर्ध्नि जयं करोति कर्णे भयं पाणियुगे च सौख्यम् ॥ पादे सुखं वक्षसि शोक

मेवगुह्येप्यमंदुःखविकारहेतुः ॥ २ ॥ ॥ इतिपुरुषाकारचक्रं ॥ ॥ अथनवप्रकारग्रहफलं ॥ ॥ दीप्तः १ स्वस्थो २ मुदितः ३ शांत ४ श
क्तः ५ प्रपीडितो ६ दीनः ७ ॥ विकलः ८ खलश्च ९ कथितोनवप्रकारोग्रहोहोरिणा ॥ १ ॥ दीप्तस्तुंगगतःखगोनिजगृहेस्वस्थोहितेहर्षितः
शांतःशोभनवर्गगश्चखचरःशक्तस्फुरद्रोमभाक् ॥ लुप्तःस्याद्विकलःस्वनीचगृहगोदीनःखलःपापयुक्खेटोयःपरिपीडितश्चखचरैःस
म्प्रोच्यतेपीडितः ॥ २ ॥ दीप्तेप्रतापादतिनापितारिर्गलन्मदालंकृतकुंजरेषु ॥ नरोभवेत्तन्निलयंसलीलंपद्मालयालंकरुचिर्विलासं ॥ ३ ॥
स्वस्थेमहद्वाहनधान्यरत्नविशालशालीबहुलंचयुक्तः ॥ सेनापतिःस्यान्मनुजोमहौजाश्चोरप्रजावाप्तजयाधिशाली ॥ ४ ॥ हर्षितोभ
वतिकामिनीजनात्यंतभूषणमणिव्रजवित्तः ॥ धर्मकर्मकरणैकमानसोमानसोद्भवचयोहतशत्रुः ॥ ५ ॥ शांतेनिशांतोहिमहीपतीनां
भवेत्स्वतंत्रोबहुमित्रपुत्रः ॥ शास्त्राधिकारीसुतरांनरःस्यात्परोपकारेसुकृतेकचित्तः ॥ ६ ॥ शक्तेतिशक्तःपुरुषोविशेषात्सुगंधमाल्या
भिरुचिःसुचिह्नं ॥ विख्यातकीर्तिःस्वजनःप्रसन्नोजनोपकर्तारिजनप्रहर्ता ॥ ७ ॥ हतबलोविकलोमलिनःसदारिपुकुलप्रबलत्वगल
न्मतिः ॥ खलसखःस्थलसंचरनोनरःकृशतरःपरकार्यगतादरः ॥ ८ ॥ दीनेतिदीनोपचयंनतप्तःसंप्राप्तभूमीपतिशत्रुभीतिः ॥ संत्य
क्तनीतिःखलुहीनकांतिःस्वजातिवैरंहिनरःप्रयाति ॥ ९ ॥ खलाभिधानेहिखलःकलिःस्यात्कांतानिचिंतापरितप्तचित्तः ॥ विदेशया
नंधनहीनतांनःकोपीभवेल्लुब्धमतिप्रकाशः ॥ १० ॥ पीडितेभवतिपीडितःसदाव्याधिभिर्व्यसननोपिनिंदितः ॥ यातिसंचलनतां

निजसंस्थलाझाकुलत्वमपिबंधुविचिंतयेत् ॥११॥ ॥इतिदीप्तादिनवग्रहप्रकारफलं॥ ॥ अथातःसंप्रवक्ष्यामिचक्रंमातंगनायकम्



अथगजचक्रं



॥ येनविज्ञानमात्रेणयात्रायुद्धेजयोभवेत् ॥१॥ गजाकारंलिखेच्चक्रंसर्वावयवसंयुतम् ॥अष्टाविं
शतिऋक्षाणिदेयानिसृष्टिमार्गतः ॥२॥ मुखेशुंडाग्रेनेत्रेचकर्णशीर्षांघ्रिपुच्छके ॥ द्विकंद्विकंच
दातव्यंपृष्ठोदरेश्चतुश्चतुः ॥३॥ द्विरदव्यमभान्यादौवदनाद्गणतेबुधैः ॥ यत्रऋक्षेस्थितःसौरिर्ज्ञे
यंतत्रशुभाशुभम् ॥४॥ मुखेशुंडाग्रेनेत्रेचसौरिभंमस्तकोदरे ॥ युद्धकालेगतेयस्यजयस्तस्यन
संशयः ॥५॥ पृष्ठेपादेचपुच्छेचकर्णसंस्थेशनैश्चरे ॥ मृत्युर्भंगोरणेतस्यऐरावतसमोयदि ॥६॥
एतेषांदुष्टभागानांस्वकालःसंस्थितःशनिः ॥ तत्कालेपट्टबंधोपिवर्जनीयःप्रयत्नतः ॥७॥ पृथिव्यां
भूषणंमेरुःशर्वर्यांभूषणंशशी ॥ नराणांभूषणंविद्यासैन्यानांभूषणंगजः ॥८॥ ॥इतिगजच
क्रं॥ ॥अश्वाकारंलिखेच्चक्रमश्वधिष्ण्यादितारकाः॥ वदनात्सृष्टिगादेयाअष्टाविंशतिसंख्यया ॥१॥
मुखाक्षिकर्णशीर्षेषुपुच्छांघ्रीयुग्मसंख्यया ॥ पंचपंचोदरेपृष्ठेसौरिर्यत्रफलंततः ॥२॥ मुखाक्षिकर्ण-
शीर्षस्थोयदासौरिस्तुरंगमे ॥ तदारिभंगमायातिरणेशत्रुवशंगतः ॥३॥ कर्णांघ्रिपृष्ठपुच्छस्थेअश्वांगेध्वर्कनंदने ॥ विघ्नमंभंगहानिंच

करोत्यसौमहाहवे ॥ ४ ॥ एतत्स्थानस्थितःसौरिःसदाकालेहयस्यच ॥ पट्टबंधेगमेयुद्धे वर्जयेत्तंहयंनृपः ॥ ५ ॥ देशांतरस्थितःसौरीरिपवः

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| अ | व | क | ह | ड | मो | मे | मु | मी | म |
| इ | वि | कि | हि | डी | टो | टे | टु | टी | ट |
| उ | वु | कु | हु | डु | षो | षे | पु | प | प |
| ए | वे | के | हे | डे | रो | रे | रु | रा | र |
| उ | वो | को | हो | डो | तो | ते | तू | ती | त |
| ल | लि | लू | ले | लो | यो | जो | भो | यो | यो |
| च | चि | चू | चे | चो | मे | जे | भ | ये | ने |
| द | दि | दू | दे | दो | ऋ | जु | भु | यु | नु |
| श | शि | शृ | शे | शो | मि | जि | भि | यि | सु |
| ग | गि | गू | गे | गो | प | ज | भ | य | न |

संतिशंकिताः ॥ तुरंगायस्यभूपस्यविचरंतिमहीतले ॥ ६ ॥ ॥
इतिअश्वचक्रंसमाप्तम् ॥ ॥ चक्रंशतपदंवक्ष्येऋक्षांशाक्षरसं
भवं ॥ नामादिवर्णतोज्ञेयमृक्षराश्यंशकंतथा ॥ १ ॥ तिर्यगूर्ध्व
गतारेखारुद्रसंख्यालिखेद्बुधः ॥ जायतेकोष्टकंतत्रशतमेकंन-
संशयः ॥ २ ॥ न्यस्यावकहडादीनिरुद्रादिविदिशक्रमात् ॥ पं
चपंचक्रमेणैव विंशावर्णान्प्रयोजयेत् ॥ ३ ॥ पंचस्वरसमायो
गएकैकंपंचधाकुरु ॥ कुर्यात्कुपुमृदुस्थानित्रीणित्रीण्यक्ष-
राणिच ॥ ४ ॥ कुघङछ भवेत्स्तंभोरौद्रईशानगोचरे ॥ पुषण
ठभवेत्स्तंभोहस्तआज्ञेयसंज्ञके ॥ ५ ॥ भधफढभवेत्सूर्वेदुघड

अथाश्वचक्रम् .



जञत्तरातले ॥ एवंस्तंभचतुष्कंचज्ञातव्यंस्वरवेदिभिः ॥ ६ ॥ धिष्ण्यानिकृत्तिकादीनिप्रत्येकंचतुरक्षरैः ॥ साभिजितंचशस्तस्यशतकंद्वादशाधि

कं॥७॥ ग्रहऋक्षांशककोष्टस्थः क्रूरःसौम्योपिवाग्रहः॥ ततस्तद्वर्जयेन्नित्यंपुंसोनामाद्यमक्षरं॥८॥ सौम्यैर्विद्धेशुभंज्ञेयमशुभंपापखेचरैः॥ मि-




श्रैर्मिश्रफलंतत्रनिर्वेधेनशुभाशुभम्॥९॥ यदुक्तंसर्वतोभद्रंग्रहोपग्रहवेधतः॥ शुभाशुभफलंसर्वंतदिहा पिविचिंतयेत्॥१०॥ ॥इतिशतपदचक्रं॥ ॥अथसूर्यकालानलचक्रंलिख्यते॥ ॥सूर्यकालानलंचक्रंस्वर शास्त्रोदितंमहत्॥ तदहंविशदंवक्ष्येचमत्कृतिकरंपरं॥१॥ त्रिशूलकायाःसरलाश्चतिस्रःकिलोर्ध्वरेखाः परिकल्पनीयाः॥ रेखात्रयंमध्यगतंचतत्रद्वेद्वेचकोणेपरिघेविधेये॥२॥ त्रिशूलकोणांतरगान्यरेखात दग्रयोःशृंगयुगंविधेयम्॥ मध्यत्रिशूलस्यचदंडमूलात्सव्येनभान्यर्कभतोभिजिच्च॥३॥ स्वनामगं यत्रगतंचतत्रप्रकल्पनीयंसहसत्फलंहि॥ तत्तस्यतत्रऋक्षेन्वितयेक्रमेणचिंतावधश्चप्रतिबंधनानि॥४॥ शृंगद्वयेरुकूचभवेच्चभंगंमूलेषुमृत्युंपरिकल्पयंति॥ शेषेषुधिष्ण्येषुजयश्चलाभोभीष्टार्थसिद्धिर्विवि धानराणां॥५॥ श्रीसूर्यकालानलचक्रमेतद्रदेचबाणेचरणेप्रयाणे॥ प्रयत्नपूर्वंपरिचिंतनीयंपुरातना नांवचनंप्रमाणम्॥६॥ रवेर्वेधेमनस्तापोद्रव्यहानिश्चभूसुते॥ रोगपीडाकरोमंदोराहुःकेतुश्चमृत्युदः॥७ ॥गुरोर्वेधेभवेल्लाभोरत्नलाभश्चभार्गवे॥ स्त्रीलाभश्चंद्रवेधेचसुखंस्याद्बुधवेधतः॥८॥ जन्मराशेःध्रुववेधेनफलमेतत्प्रकीर्तितं॥९॥ ॥इति

सूर्यकालानलचक्रं॥ ॥अथचंद्रकालानलचक्रं॥ ॥चंद्रकालानलंचक्रंव्योमाकारंलिखेद्बुधः॥चतुर्दिक्षुत्रिशूलानिमध्यत्र्यस्राणिकारये



त्॥१॥पूर्वत्रिशूलमध्यस्थंदिवसर्क्षंसमालिखेत्॥त्रिशूलेचबहिर्मध्येम-
ध्येबहिस्त्रिशूलके॥२॥नामर्क्षंचस्थितंयत्रज्ञेयंतत्रशुभाशुभं॥३॥त्रि
शूलेचभवेन्मृत्युर्मध्यमंबहिरष्टके॥आयुःप्रजाजयोलाभोचंद्रगर्भेनसं
शयः॥४॥ ॥इतिचंद्रकालानलचक्रं॥ ॥अथयमदंष्ट्राचक्रंलिख्यते॥
॥नवोर्ध्वगानिधिष्ण्यानिनवतिर्यग्गतानिच॥ अधोगतानिधिष्ण्यानिन
वचैवविनिर्दिशेत्॥१॥चतुर्नाडिकृतोवेधोजन्मनक्षत्रयोगतः॥सर्पाका
रश्चवक्रश्चकालचक्रेप्रजायते॥२॥त्रीणिमध्यगतर्क्षाणितानिकालमु-
खानिच॥कोणस्थितेचंद्रधिष्ण्येतत्त्वदंष्ट्राद्वयंमतं॥३॥दिनर्क्षमादितः
कृत्वानामर्क्षंयत्रसंस्थितम्॥मुखदंष्ट्रागतेमृत्युःशुभमन्यत्रसंस्थिते

अथयमदंष्ट्राचक्रं.




॥४॥ ज्वरेचनष्टदष्टेचविवादेविग्रहेरणे॥कालदंष्ट्रास्यगंनामयस्यतस्यमहत्भयम्॥५॥ ॥इतियमदंष्ट्राचक्रम्॥ ॥अथत्रिनाडीचक्रंलि

ख्यते॥ ॥आर्द्राद्यंविलिखेच्चक्रंमृगांतंचत्रिनाडिकं॥ भुजंगसदृशाकारंमध्येमूलंप्रतिष्ठितं॥१॥ यद्दिनेएकनाडिस्थाश्चंद्रनामर्क्षभास्क



| | | | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| आ | पु | पु | आ | म | पू | उ | ह | चि | स्वा | वि | अ | ज्ये | मू | पू | उ | श्र | ध | श | पू | उ | रे | अ | भ | कृ | रो | मृ |

राः॥तद्दिनंवर्जयेत्तस्यविवादेविग्रहेरणे॥२॥ रोगिणोजन्मऋक्षस्यएकनाड्यांयदाशशी॥ तदापीडांविजानीयादष्टप्राहरकींध्रुवं॥३॥ रोगिणोजन्मऋक्षस्यएकनाड्यांयदारविः॥ यावदृक्षेभवेद्रोग्यंतावत्पीडांविनिर्दिशेत्॥४॥ रोगिणोजन्मऋक्षस्यएकनाड्यांयदा भवेत्॥ जन्मऋक्षंरविश्चंद्रस्तदामृत्युंसमादिशेत्॥५॥ जन्मऋक्षंरवेश्चंद्रोभवेद्य दिकथंचन॥ अन्यास्त्वन्यासुनाडीषुतदानीरोगताभवेत्॥६॥ ॥इतिनाडीचक्रं॥ ॥अथसर्वतोभद्रचक्रंलिख्यते॥ ॥अथातःसंप्रवक्ष्यामिचक्रंत्रैलोक्यदीपकं॥ विख्यातं सर्वतोभद्रंसद्यःप्रत्ययकारकं॥१॥ एकवेधेभवेद्युद्धंयुग्मवेधेधनक्षयं॥त्रिवेधेनभवेद्रोगो मृत्युश्चैवचतुर्ग्रहैः॥२॥ एकादिक्रूरवेधेनफलंपुंसांप्रजायते॥उद्वेगश्चतथाहानीरोगो

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| | | | मृ | आ | पु | पु | अ | आ |
| अ | कृ | रो | मृ | आ | पु | पु | अ | म |
| भ | [illegible] | ३१ | वुरवै सा | मि·३ ज्येष्ठ | क·४ डासा | तृर | म | पु |
| अ | च | मे चैत्र | ३१ | ११८ ५५पू | उ | सिं ५ श्राव· | ट | उ |
| रे | [illegible] | मी·२ फाल्गु· | ४१९ १४१२ | णा | २१७ १२भ | क·८ | पुष्य | ह |
| उ | [illegible] | उभ | अ | ३११८ १३ज | भद्रा· अ | भद्रा | णव | चि |
| पू | [illegible] | माह | पौष | जया | अः | तु·७ जसा | र | स्वा |
| श | [illegible] | ऐं २ | ष | ध·मू·९ | का८ | ए१ | त | वि |
| ध | [illegible] | ष | व | | य | न | ऋ | इ·१ |
| इ | श | अ | उ | पू | मू | ज्ये | अ | इ·२ |

मृत्युःक्रमेणच ॥३॥ भ्रमोऋक्षेक्षरोहानिःस्वरेव्याधिर्भयंतिथौ ॥ राशिवेधेमहाविघ्नंपंचवेधेनजी
वंति ॥४॥ अर्कवेधेमनस्तापोद्रव्यहानिस्तुभूसुते ॥ रोगपीडाकरःसौरीराहुःकेतुश्चविघ्नदौ ॥५॥
चंद्रेमिश्रफलंपुंसांरिपुश्चैवतुभार्गवे ॥ बुधवेधेभवेत्प्रज्ञाजीवःसर्वफलप्रदः ॥६॥ ॥इतिसर्वतोभ
द्रफलं ॥ ॥अथपंचस्वरचक्रंलिख्यते ॥ ॥अथादावुदयंयांतितिथिस्वरात्घटीस्वराः ॥ बालस्वरादि
कप्रश्नेफलंतस्यवदाम्यहं ॥१॥ तिथिभुक्तघटीसंख्यांकृत्वाफलमर्यीनतः ॥ ऋक्षवन्हिहृतेशेषेस्व
रस्तत्कालसंभवः ॥२॥ यमुद्दिश्यकृतःप्रश्नःफलंतस्यवदाम्यहं ॥ यत्रनोदृश्यतेकिंचित्तत्रप्रश्नंशुभा
शुभं ॥३॥ बालोदयेयदापृच्छालाभार्थेस्वल्पलाभदः ॥ रुजार्तेचिररोगंचगमेहानिःक्षणंरणे ॥४॥
कुमारोदयवेलायांलाभोभवतिपुष्कलः ॥ राज्येनाशंजयंयुद्धेयात्रासर्वार्थसिद्धिदा ॥५॥ युवोद
येलभेद्राज्यंकुशच्छेदंचतत्क्षणात् ॥ संग्रामेशत्रुहंताचयात्रायांसफलंभवेत् ॥६॥ वृद्धोदयेनला-
भःस्यात्कुशनाकुशवर्द्धनम् ॥ संग्रामेभंगमायातियात्रायांननिवर्तते ॥७॥ मृत्यूदयेयदापृच्छापृच्छ
तिस्वंप्रयोजनं ॥ तत्सर्वंमृत्युदंज्ञेयंयुद्धेमृत्युःसभंगदः ॥८॥ किंचिल्लाभकरोबालःकुमारस्त्वर्द्धलाभदः ॥

| अ | इ | उ | ए | उ |
|---|---|---|---|---|
| बाल | कुमार | युवा | वृद्ध | मृत्यु |
| रवि मंगळ | बुध चंद्र | गुरु | शुक्र | शनि |
| नंदा | भद्रा | जया | रिक्ता | पूर्णा |
| रेवती ७ | पुन. ५ | उफा. ५ | अनु ५ | श्रवण |
| क | ख | ग | घ | च |
| छ | ज | झ | ट | ठ |
| ड | ढ | त | थ | द |
| ध | न | प | फ | ब |
| भ | म | य | र | ल |
| व | श भ | ष | स | ह |
| मेष सिंह वृ | मि० श. | धन मीन | वृष. तुळ | मक. कुंभ. |
| वैसा. भाद्र. | मिथु. कर्क | पौष चैत्र | ज्येष्ठ कार्तिक | माघ. फाल |
| मृग. पूर्व | कन्याह्यास डसो थाव पा दक्षिण | पश्चिम | उत्तर | गुन मगधदेश |

मा.सा. ७५

सर्वसिद्धिर्युवादत्ते वृद्धे हानिर्मृतेक्षयः॥ ९॥ मृत्युर्बालस्तथा वृद्धः कुमारस्तरुणाः स्वरः॥ योयस्य पंचमस्थाने सः स्वरो मृत्युदायकः॥ १०॥ अस्वरः पद्म.
कृष्णपक्षे सः शुक्लपक्षे स ईश्वरः॥ पक्षांशकः स्वरे भुक्तिर्मासभुक्त्यर्थमानकम्॥ ११॥ नरनामादिमावर्णो यस्मात्स्वरादधः स्थितः॥ सस्वर
स्तस्य वर्णस्य वर्णस्वर इहोच्यते॥ १२॥ ॥इतिस्वरचक्रं॥ ॥जन्मभं जन्मनक्षत्रं दशमं कर्मसंज्ञकं॥ एकोनविंशआधानं त्रयोविंशं विनायक
म्॥ १॥ अष्टादशं च नक्षत्रं सामुदायिकसंज्ञितं॥ सांघातिकं च विज्ञेयं ऋक्षं षोडशसंख्यया॥ २॥ मृत्युः स्याज्जन्मभे विद्धे कर्मभे क्लेशमेव च
॥आधानर्क्षे प्रकाशः स्याद्विनाशे बंधुविग्रहः॥ ३॥ सामुदायिकभे विद्धे कष्टं हानिः सघातिके॥ जातिभे कुलनाशं च बंधनं चाभिषेकभे॥ ४॥ एते
षु नक्षत्रेषु यात्राविवाहादिमांगल्यकार्यं वर्ज्यं॥ इतिनक्षत्रविचारः॥ ॥अथरश्मिकरणविधिः॥ ॥ग्रहोच्चनीचोभिधिके च षट्काच्चकाच्छु
तेसंमहतो विभक्तं॥ तर्कै ६ स्तु राश्यादिकमध्यमब्धं सूर्यादिकानामिह रश्मिजश्च॥ १॥ तात्कालिकग्रहथापितिणमांहिथी परमनीचग्रहरा
शिअंशपाडीजइ जोनपडइ तोचक्र १२ जोडिनैपाडीजइ पाड्यापीठेशेष ६ राशिथी उपरांतिहोइ बली १२ मांहिथी सोधीजइ पछे शेषराशि अंश
घटीपल ७ सात ७ गुणाकरणा गुण्यापीछइ एतलां भइ ६० भागदेयिणा लब्धउपरिजोडणा शेषराखणा पुनः घटीयाने ६० भागलब्धअंश
मध्ये जोडणा शेषराखणा अंशने ३० भागलब्धराशिमध्ये जोडणा शेषराखणा राशिनइ ६ भागलब्धरश्मिकहीजइ राशि ३० शेषगुणाक ७५
रणा हेडला अंशजोडणा भाग ६ लब्धं अंशशेष ६० गुणशेषखडी जोडणा भाग ६ लब्धं रश्मिकी घटीशेष ६० गुणाशेषफलजोडणा भाग ६

लब्धं पलवक्रोच्चाद्द्विगुणाउ अस्तासितकउनद्ध्येश्कक्रशनीश्वरविनायथास्वोच्चस्थितस्यद्विगुणंनिरुक्ताः स्वे द्वादशेमित्रग्रहे ग्रहस्वराशौ ॥ नृ
पांशको १६ नाः कथितास्तुर्नीचे शत्रोः पुनश्चैर्द्विदशांशकेन ॥ वक्री पुनस्तद्विगुणंददातितस्तागकालेऽष्टमभागहीनः ॥२॥ ॥ इतिरश्मिकरणं ॥ ॥
अथरश्मिफलंसारावल्यां ॥ ॥ एकादिपंचयावच्चेद्रश्मिभीरतिदुःखिताः ॥ कुलविहीनाः परितः कुकादरिद्रानीचरताःसंभवंतिनराः ॥१॥
परतोदशकंयावद्भूतकहीनाः विदेशगमनरताः ॥ जायंतेतत्रवराः सौभाग्यपरिच्युतामलिनी ॥२॥ रूपंचदशेभ्योजातास्तत्र प्रधानपूज्येताः ॥ ध
र्मारंभाःसुसुखाः कुलतुल्याः प्रजायंते ॥३॥ आविंशतिर्भवेयुः कलाधिकानलचराः प्रजायंते ॥ कीत्युत्कारामनुष्यायथाक्रमंस्वजनसंपूज्याः ॥४
पूज्याः स्कुभगाधीराः कृतिनोधीराश्वशरकृतिंयावत् ॥ परतोभवंतिमनुजाः संसाराधत्तसकलकरणीयाः ॥५॥ अधोउत्तरेणचंडा २७ नृ-
पाश्रिताः २८ नृपतिलब्धधनसौख्याः ॥ त्रिंशद्यावत्सचिवाः पूज्याश्चभवंतिभूतानाम् ॥६॥ एकत्रिंशद्भिरथप्रचुराः ख्यातामहीभुजा
निष्ठुराः ॥ द्वात्रिंशद्भिः पुरुषाः पंचशतग्रामपतयःस्युः ॥७॥ ग्रामसहस्राधिपतिं अधिकात्करोतिरश्मीनां ॥ त्रिसहस्रग्रामाणांपुरुषं
सूतेचतुस्त्रिंशत् ॥८॥ परतोमंडलभाजोवहुकोशपरिग्रहामहत्सत्वाः ॥ प्रख्यातकीर्तियशसोभवंतिसुभगाश्चलोकानां ॥९॥ त्रिंशत्षड्भिः
सहितारश्मीनांयस्यजन्मसमयेस्यात् ॥ सार्द्धं भुनक्तिलक्षंग्रामणीःसतुपुमान्नियतं ॥१०॥ त्रिंशकसप्तकसहिताःरश्मीनांसंचयोभवेद
वं ॥ लक्षत्रितयपतित्वंग्रामाणांजायतेपुंसां ॥११॥ त्रिंशद्वसुभिःसहिताग्रामायेषांभवंतिपुरुषाणां ॥ मुनिसंमतलक्षाणांग्रामाणांतेधिपाज्ञेयाः

॥१२॥ त्रिंशन्मनवकसंख्याजन्मनियेषांग्रहेस्थिताःसंति ॥ तेतोषिताःसकलजनाभवंतिपृथिवीश्वराःपुरुषाः॥१३॥ दशजलधि ४० गुणार्य
रश्मिसंख्यागुणानांदिशांतिविपुलभूमेःपालकत्वंचयेषाम् ॥ हतरिपुवनितागर्भीयितेर्नित्यकीर्तिःकरुणरुदितशब्दैःक्रंदिताक्रोशगर्भैः॥१४॥
शशिजलनिधिसंस्थैः४१ रश्मिभिःसूर्यनेजान्जलनिधिसहितायाःपार्थिवःस्यात्सभूमेः॥ द्विजलधिरसनायापक्षवेदाख्यसंख्येत्रिजलधि
रसनायारामवेदैस्तथैव ॥१५॥ वेदाब्धितुल्यैश्चमयूखजालैर्जातानरेंद्राःखलुसार्वभौमाः॥ सौम्याःसुरब्राह्मणभक्तियुक्तादीर्घायुषःसत्वयु
ताभवंति ॥१६॥ परतःपरतःकिरणैर्द्वीपांतरपालकातिपुरुषःसर्गगणः॥ सत्वाःसर्वनमस्याःसुभगामहेंद्रतुल्यप्रतापाश्च ॥१७॥ चत्वारिं
शद्युक्ताःपंचादिभिरत्रयस्यसुतोज्ञेयम् ॥ तस्यसानूसदिष्टंसर्वक्षितिपालकंमुक्ताः॥१८॥ भवनभरसहिष्णोःसर्वतःक्षीणशत्रो-
स्त्रिदशपतिसहस्नःसर्वलोकस्तुतस्य ॥ विदधतिविहगानांरश्मयोनीचदीनास्तुरगकृतिसमानाश्चक्रवर्तित्वमेव ॥१९॥ अभिमुखकर
प्रवाहाःफलंप्रयच्छंतिपुष्टतरमाशु ॥ तद्विपरीतंपुंसांपराङ्मुखस्थाग्रहेंद्राणां॥२०॥ जन्मसमयेग्रहाणांरश्मीनांसक्षयोभवंति ॥ वृ
द्धेवृद्धिर्नृणामथमोक्षमनःक्रमेणैव॥२१॥ ॥इतिरश्मिजातकाध्यायःसमाप्तः॥ ॥अथाग्रेचतुर्विंशतिबलानिश्रीपतिपद्धत्यनुसारेणलि
ख्यंते॥ ॥बलावबोधेनविनादशादिक्रमावबोधेनभवेद्यतोतः॥ तत्स्थानदिक्कालनसर्गचेष्टाहभेदभिन्नंकथयाम्यशेषं॥१॥ अथाग्रेचतुर्विं
शति २४ बलसाधनम्॥ ॥जिसग्रहकाबलसाधइतिसग्रहकातात्कालिकथापणा।पुनस्तात्कालिकराशिहोइ तिसराशिकास्वामीजुग्रहहोई

सोग्रह तात्कालिकमैत्रीचक्रदेखणादेखिविचारणासमकीराशिहोईकईशत्रुकीकैमीत्रकीकईअधिमित्रकीकईअधिशत्रुकीराशिहोईसो
विचारिग्रहबलणाइसप्रकारसकलग्रहघालणा अमुकग्रहअमुकराशिवास्वगृहेवा अधिमित्रवाशत्रुवा अधिशत्रुवासमविचारिलिखणा पुनःहो
राकईविषेउग्रहकिसराशिहुईउसराशिकास्वामी तात्कालिकमैत्री चक्रदेखणा शत्रुमित्रइत्यादिदेखणा अमुकग्रह अमुकहोरा अमुकक्षेत्रीयथा
अमुकग्रहजाणेकरी सूर्यइहुआसूर्यद्रेष्काणकईविषेकिसराशिहुइउसराशिकास्वामीजुग्रहसुतात्कालिकमैत्रीचक्रेंदेखणाशत्रुमित्रइत्या
दिविचारणाद्रेष्काणेसूर्यद्रेष्काणेंअमुकहोराअमुकक्षेत्रीअमुकहोराअमुकग्रहद्रेष्काणेअमुकक्षेत्रीअमुकग्रहसप्तांशेअमुकक्षेत्रीअमु
कग्रहनवांशेअमुकक्षेत्रीअमुकग्रहद्वादशांशेअमुकक्षेत्रीअमुकग्रहत्रिंशांशेअमुकक्षेत्री॥ ॥इतिसप्तकवर्गबलंसमाप्तं॥ ॥अथउच्चबलसाधनं
॥ ॥जिसग्रहकाउच्चबलकरैतिसग्रहकाउच्चबलकरैतिसग्रहकातात्कालिकथापणाउसग्रहकापरमनीचपाडणापाइचापबीजोराशि६तांईअधि
कहोईतोचक्र१२हूंतीशोधणापुनःराशिस्थात्रिंशत् ३० गुणिताइतिसूत्रेणलिप्तापिंडंकुर्यात्॥लिप्तापिंडनुभाग१०८०० लब्धंअंशयदाभोगोनपत
तितदालब्धंपूर्णंशेषंषष्टि६० गुणं १०८०० लब्धंपलइसप्रकारसकलग्रहकाउच्चबलकरणा॥ ॥अथमूलत्रिकोणमाह॥ ॥जोग्रहलग्नकइविषै-
मूलत्रिकोणीहोईतिसबलरूप० कला ४५ विकला० लिखीईयदामूलत्रिकोणीनभवति। तदाबल००० लिखीईइसप्रकारिसकलग्रहकरणा॥ ॥
अथस्वगृहीनबलमाह॥ ॥यदाखेटस्वग्रहीभवतितदारूप० कला ३० विकला० लिखीइयदातात्कालिकअधिमित्रकइघरिहोईतोरूप० कला २२ वि

कला ३० यदामित्रकइधरिहोइतोरूप० कला १५ विकला ० बललिखीजइ॥ यदासमक्षेत्रीतदारूप० कला ७ विकला ३० बललिखी यदाशत्रुक्षेत्रीहो
ईतदारूप० कला ३ विकला ४५ बललिखीई यदाअधिशत्रुहोईतात्कालमैत्रीचक्रविषईतोरूप० कला १ विकला ५२ बललिखीइ इणप्रकार
ग्रहबलसकलग्रहांकाकरणा॥ ॥अथहोराबलमाह॥ ॥स्वहोराविषइजो ग्रहहुइ तदाहोराबलरूप० कला ३० विकला ० लिखीइ॥ पुनः अ-
धिमित्रहोराविषईहोइतदारूपकला २२ विकला ३० यदामित्रहोईतदारूप० कला १५० यदासमहोराकईविषईहोइतदारूप०।७।३० यदाहो
राकइविषइ शत्रुगृहेग्रहोभवतितदारूप०।३।४५ यदाहोराविषैअधिशत्रुगृहेग्रहोभवतितदाबलं०।१।५२ ॥इतिहोराबलं॥ ॥इस
कीप्रकारइद्रेष्काणबलसप्तांशबलनवांशबलद्वादशांशबल इणप्रकारिसप्तवर्गबलकरणा॥ ॥अथभावादिबलमाह॥ ॥युग्मभांशग
तौशशिशुक्रौपाठः॥ टीका॥ जोचंद्रमाशुक्रसमराशिहोईतोरूप० कला १५ विकला० लिखीइ॥ जोशशिशुक्रविषमराशिहोइतोब
लरूप००० धरीजइ यदारविकुजगुरुबुधशनिविषमराशिहोईतोबलरूप० कला १५ विकला० लिखीयई॥ यदारविशनिकुजबुधगुरुजो
समराशिहोईतोतींकोबललिखीइ॥ लग्नविषइविषमसमविचारणा॥ नवांशककईविषईभाकद्यासही परंविचारणानहीं॥ ॥इतियु-
ग्मअयुग्मराशिबलं॥ ॥अथकेंद्रपणफरआपोक्लिमबलमाह॥ ॥कंटकाद्युपगतेषुनिधेयारूप १ कार्द्ध३० चरणानिजवीर्ये १५ जिसका
केंद्रबलकरइसोग्रहकेंद्रीहोइतोरूप १ बलंददानि॥ जोपणफरभुवनहोईतोरूप० कला ३० विकला० ददाति॥ जोआपोक्लिमभुवनहोईतो

रूप० कला० विकला १५ लिखीई॥ ॥अथभांशबलमाह॥ ॥भांतमध्येसुखगेषुपादः स्त्रीनपुंसकनरेषुनिधेयः॥१॥ ॥टीका॥ ॥
स्त्रीग्रह नपुंसकग्रहपुरुषग्रहतस्यबलमाह॥ ॥चंद्रशुक्रएस्त्रीग्रह एजोअंश २० उपरांतिहोइतोअंश १० दसतांइतोबलरूप कला १५ विक-
ला० लिखीइजोअंश २० तहीनहोइतोभांतबलशून्यलिखीइ००० बुधशनैश्वरएनपुंसकग्रहजोअंश १० उपरांति अंश १० पर्यंतहोईतोभां
तबलरूप ० कला १५ विकला॥ यदाअंश १० नलइहोइतोकिंवाअंश २० वीसउपरांतिहोइतोभांतबल ००० लिखीइ॥ सूर्यमंगळगुरुए
पुरुषग्रहएजोअंश १० भीतरीहोइतोभांतबल०।१५।०लिखीयइ॥ जोअंश १० उपरांतिहोइतोबलकिंसुं नहींतोबलशून्यलिखीइ०००॥
॥इतिभादिबलं॥ ॥इतिद्वादशप्रकारस्थानेबलंसंपूर्णम्॥ ॥अथदिग्बलमाह॥ ॥ स्थानवीर्यमिदमेवमिहोक्तंदिग्बलंशृणुपूर्वदिशा
तः॥ विद्गुरूरविकुजौरविसूनुः शुक्रशीतकिरणौबलिनौस्तः॥ ॥अस्यटीका॥ ॥बुधगुरुलग्नविषईपूर्वबली॥रविकुजदशमस्थानकिंदक्षि
णबली॥ शनिसप्तमस्थानकिंपश्चिमबली॥शुक्रचंद्रचतुर्थस्थानकिंउत्तरबली॥ अथदिग्बलरूपादिमाह॥ ॥अर्कात्कुजात्स्वांबुगृहंविशोध्य
जीवाद्बुधाच्चापिकलत्रभावे॥ मेषूरणांभार्गवचंद्रसौम्याः प्राग्लग्नमुष्णांशुभभावशेषं॥७॥षड्भाधिकश्चेद्गुरुणाविशोध्यंलिप्तीकृतंशुभ्र
गजाश्विभू १०८००मि॥भजेदवाप्तंहिककुद्बलंस्यादतःपरंकालबलंप्रथामि॥८॥ ॥अस्यटीका॥ ॥जोरविकुजकादिग्बलकरइतोइनता
कालिकमध्येचतुर्थभावंपात्ययदानपततितदाचक्रं १२ दत्वापात्यपात्यावशेषेयदाषड्भ्योधिकंतदाचक्रशुद्धकरणाचक्रशुद्धकीयां

पाछीराशिस्थात्रिंशद्गुणिताइतिसूत्रेणालिखित्वातत्ताविंडंकुर्यात्॥लब्धांपिंडंनैभागखाभ्रगजाभ्रभूमि १०८०० लब्धंरूपंशेषंषष्टिगुणं
भाग१०८० लब्धंकलाएवंविकलाइसप्रकारिसकलग्रहकादिग्बलकरणादिरूपादिविशेषेस्थानकजुआवइसुदिग्बललिखीइ॥ पुनःजोदि
ग्बलकरईतोगुरुबुधतात्कालिकथापइससमभावतात्कालिकथापइससमभावतात्कालिकमध्येपात्यपूर्वोक्तकर्मकरणा॥गुरुबुध
दिग्बलहोइयदाशुक्रचंद्रकादिग्बलकरैतोइणकातात्कालिकमांहिदशमलग्नभावपाडणापूर्वोक्तकर्मकरणा॥चंद्रशुक्रदिग्बलंभवति॥
यदाशनिदिग्बलंकुर्यात्॥तदाशनितात्कालिकमध्येप्रथमलग्नभावंपात्यपूर्वोक्तकर्मकरणाशनिदिग्बलहोइ॥ ॥इतिदिग्बलटीका
॥ ॥अथकालबलनतबलउन्नतबलमाह॥ ॥नक्तंबलाभौमशशांकमंदागुर्वर्कशुक्रादिननक्तयःस्युः॥सौम्यःसदावासरनक्तभाजो-
ग्राह्योबुधैरुन्नतसंज्ञकालः॥९॥नतस्त्वमीवीर्यवतांपलीकृतःखखाष्टचंद्रै१८००र्विहृतोबलंभवेत्॥बुधस्यरात्रौचदिवायरूपंविधेयमे
तत्समयोद्भवंबलं॥१०॥ ॥अस्यार्थः॥ ॥भौमचंद्रशनिएराशिबलीगुरुशुक्रएदिनबलीबुधरात्रिपिणदिनबली॥जोग्रहरात्रिबलीहुइ-
तिणाकाबलनततइकरणा॥जोग्रहदिनबलीहुइतिणाकाबलउन्नतइंकरणा भौमचंद्रशनिइनकाबलननतइ गुरुशुक्रसूर्यइनकाबलउन्नततइ
करइबुधदिवारात्रिबलीतिसकाबलनतोन्नतरूप१ सदैवलिखइजिणाकाबलनतनइंकह्याहुइसोनतकर्मभूमौस्थाप्यषष्टि ६० गुणपलयोज्य
तस्यभाग१८००लब्धंरूप॥शेषंषष्टि६०गुणंभाग १८०० इसप्रकारिनतबलत्रिस्थानकआवैपुनःजिणाकाउन्नततौंबलकह्याइसो-

उन्नतकर्मभूमौस्थाप्यषष्टि ६० गुणंपलयोज्य भाग १८०० लब्धंरूपादिकलाविकलाइणप्रकारिउन्नतबलकरणा॥ इतिनतोन्नतबलं॥ ॥अ
थपक्षबलमाह॥ ॥व्यर्कः शशीषड्भवनाधिकश्चेच्चक्राद्विशोध्योथकलाकृतोसौ॥ चक्रार्द्धलिप्ता १०८०० विहृतोचलक्षपक्षेबलंस्यादधकृ-
ष्णपक्षे॥१॥ तदेवरूपाच्च्युतमेवकृत्वाजगुर्बुधाः पक्षबलंग्रहाणां॥ बलस्यपक्षेशुभखेचराणांपापग्रहाणामसितेचपक्षे॥२॥ ॥अस्यार्थः॥
चंद्रतात्कालिककर्मभूमौस्थाप्यतन्मध्येसूर्यतात्कालिकपात्यत्यदानपततितदाचक्रंदत्तापात्यः अवशेषेयदाषड्राश्यधिकंभवतितदाचक्रमध्ये
शोध्यः शेषंराशिस्थात्रिंशद्गुणिताइतिसूत्रेणलिप्तापिंडंकुर्यात्॥ तस्यभाग १०८०० एभिरंकैर्दत्वालब्धंरूपंशेषंषष्टि ६० गुणंभाग १०८००
लब्धंकलाएवंविकला ३ स्थानिकपक्षयहूका॥ अत्रपक्षबलविचारः॥ जोपक्षबलवर्ततांआयउहोइतोउअरकृष्णपक्षविषईजन्महो
इतोउपक्षबलपापग्रहांकीक्षीणचंद्रसूर्यमंगलशनिइनकापक्षबलकृष्णापक्षविषईजन्महोइतोकहियई॥ पुनःअउरबुधइनकइसमीपि
होइतोउसकाभीकहियहिचंद्रशुक्रबुधगुरुकापक्षबलकृष्णापक्षमध्येजन्महोईतोपापग्रहकापक्षबलरूपमांहिशोधईशुभग्रहकापक्षकृष्ण
पक्षविषईहोइतोजोशुक्लपक्षमध्येजन्महोईतोजोपक्षबलवर्त्योआवईसोपक्षबलशुभग्रहकाकहियई॥ पूर्णचंद्रबुधगुरुशुक्रइनकाकहिइ
शुक्लपक्षमध्येजन्महोइतोशुभग्रहकापक्षबलरूपमांहिसंशोधीयई पापग्रहकापक्षबलशुक्लपक्षविषईहोइ॥ ॥इतिपक्षबलं॥ ॥अथ
दिनरात्रिबलमाह॥ ॥अन्हित्रिभागेषुबलंस्वरूपं१ सौम्यार्किंतिग्मांशुशशंक्रमेण॥ कार्येतुषारांशुसितासृजांबुरात्रौसदैवामरपूजि

तस्य॥२॥ ॥अस्यटीका॥ ॥यदादिनमध्येजन्मतदादिनस्यत्रिभागंकुर्यात् तस्यादिनमध्येजन्महोइतिदिनकादिनमानथापिइथापि
करिभाग ३ लब्धंघटीशेषंषष्टि ६० गुणंभाग ३ लब्धंपलजुघटीपलपायासुदिनकात्रिभागपायाजोदिनकाप्रथमत्रिभागमध्येजन्महो
ईतोबुधकाअन्हित्रिभागबलरूप १ कला॰ विकला॰ लिखै॥ शेषग्रहका अन्हित्रिभागबल ००० लिखीइ यदादिनस्यद्वितीयस्यभाग
मध्येजन्महोइतोसूर्यअन्हित्रिभागबल १ कला॰ विकला॰ शेषग्रहकाअन्हित्रिभागपूर्णलिखीइ यदादिनस्यतृतीयभागमध्येजन्मशनि
अन्हित्रिभागबलरूप १ कला॰ विकला॰ लिखीइशेषग्रहकाअन्हित्रिभागबल ००० लिखीइ॥ इतिदिनरात्रिभागबलं॥ ॥अथरात्रित्रिभा
गबलमाह॥ ॥जिसदिनकारात्रिमध्येजन्महोइतिसदिनकादिनमानथीघटीपलदिनमानकी ६० मांहिंसोधीयइजुसोध्याहूंतीऊगरइ
सोरात्रिमानकहीइ घटीपलऊगरइ घटीपलकर्मभूमौस्थाप्यकरिघटियांनइभाग ३ लब्धंशेषंषष्टि ६० गुणंभाग ३ लब्धंपलंजु घटीपल
पायासोआदिकात्रिभागपाया॥ यदारात्रिप्रथमतृतीयभागमध्येजन्मतदाचंद्रस्यतृतीयभागबलरूप १ कला॰ विकला॰ लिखीइ यदा
रात्रितृतीयभागमध्येजन्मतदाशुक्रकारात्रित्रिभागबलरूप १ कला॰ विकला॰ लिखीई॥ शेषग्रहस्यरात्रित्रिभागबल ००० लिखीइ॥
यदारात्रितृतीयभागमध्येजन्मतदाभौमबलरूप १ कला॰ विकला॰ लिखीईशेषग्रहस्यरात्रिभागबल ००० लिखीइदिनमध्येजन्मकिंरात्रि
मध्येजन्मतदागुरुबलरूप १ सदैवददाति॥ ॥इतिअन्हिरात्रित्रिभागबलं॥ ॥अथवर्षबलमाह॥ ॥प्रथमवर्षाधिपतिआनयन

माह॥ ॥शश्याश्विभव ११२१ विहीनाद्युगुणात्सरितु अग्निविभाजिता ३६० द्यासंतृघ्नंसेकं सप्तविभक्तंसावनवर्षाधिपोर्कादिः॥१॥ ॥अ
स्यार्थः॥ ॥जोजन्मदिनकाअहर्गणकीयाहोईसोकर्मभूमौस्थाप्यकरि ११२१ एभिअंकापात्यपाडापाछइशेषनईभाग ३६० दीजईदेकरि
जोशेषरहइसोअर्कादिदेवकरिवर्षाधिपजाणणा॥ इतिसंवत्सराधिपानयनं॥ ॥जिसवर्षमध्येजन्महोईऔरजोग्रहउसवर्षकाअधिप
तिहोइउसग्रहकावर्षबलरूप० कला १५ विकला० लिखीइ ॥शेषग्रहकावर्षबलपूर्ण००० लिखीइ॥ ॥इतिवर्षबलं॥ ॥अथमासबलमाह॥
॥तत्रप्रथममासाधिपतिआनयनं॥ ॥शशिमुनि ७१ हीनात्रिंशद्विभाजिताफलमहर्गणायद्विगुणंसेकंसप्तविभक्तं॥सावनमासाधिपो
र्कादिः॥१॥ ॥अस्यटीका॥ ॥जन्मदिनकाअहर्गणकर्मभूमौस्थाप्यते॥ थापिकरि ७१ भभिअंकापात्यः पश्चात्भाग ३० दीजईजोशेषरहेइ-
सोगतदिनमासाधिपतिराजोलब्धांकहोइसोदूणाकीजइ एकऔर १२ ढाइयइपाछइभाग ७ कादीजईशेषरहेसोअर्कादिमासाधिपजाण
णा॥ इतिमासाधिपआनयनं॥ ॥जिसमासमध्येजन्महोईऔरजोग्रहसमकीनाकाअधिपतिहोइउरउसग्रहकामासबलकरइतोउसग्रहका
मासबलरूप० कला ३० विकला० लिखीईशेषग्रहकामासबलपूर्ण००० लिखीइ॥ ॥इतिमासबलं॥ ॥अथदिनबलमाह॥ ॥सूर्यादिकजिसवा
रमध्येजन्महूओहोइउसग्रहकादिनबलरूप० कला ४५ विकला० लिखीइ।शेषग्रहकादिनबलपूर्ण००० लिखीइ॥ ॥इतिदिनबलं॥ ॥अथ
कालाक्षहोराबलं॥ ॥वारप्रवृत्तिर्घटिकाद्विनिघ्नाइतिपाठः प्रथमवारप्रवृत्तिकीवार्ताजिसदिनकीवारप्रवृत्तिकरइतिसदिनकामिश्रकर्मभू

मेस्थाप्यथापकरिमिश्रमांहि १५ अउरजोडई ॥ जोड्यांहूंतासाठि ६० तरहीनहोइतोसाठि ६० मांहिपडइ ॥ पाड्यांहूंतइजोघटीपलरहइसोउतनीघ
टीपलपहिलासूर्यकाउदातइवारप्रवृत्तिकहीयइ तोउठइघटीपलइष्टघटीयांमांहिधनकीजई ॥ जोमिश्रमांहिजोड्यांहूंतइसाठि ६० तई
अधिकहोईतोसाठि ६० पाडिगेरणा पाड्यापाछइजोघटीपलरहइसोउतनीघटीपलउपरांतिसूर्यकाउदापीछइवारप्रवृत्तिकहीउठइघटीप
लइष्टघडीयांमांहीपाडीयई ॥ इतिवारप्रवृत्तिकीवार्ता ॥ ॥अथकालहोराआनयनमाह ॥ ॥वारप्रवृत्तितइंलेकरिजन्मसमयतांईजितनीघटी
पलभुक्तहूआहोइसोउठइघटीदूणीकीजईदूणीकियांपाठईभाग ५दीजैलब्धंभुक्तकालहोराएकओरलाईजईवर्तमानकालहोराहोइ ॥ जि
सवारमध्येजन्महोइउसवारतांइलेकरिगिणणारविशुक्रसौम्यशशांकसौरेज्यकुजाः अनुक्रमेणइत्यादिगिणाई ॥ जोपांचकाभागदी-
धाहूंतईजितनाअंकपायाथातितनाअंकतांइगिणाई ॥ जिहांजाईविश्रामहोईतहांजोअर्कादिमध्यजोहोइतिसकीकालाक्षहोराकही
जइ ॥ जोउसकाकालाक्षहोरकहीलरूप १ कला० विकला० लिखई ॥ शेषग्रहकाकालाक्षहोराकहीइरूप००० लिखीइ ॥ ॥इतिका
लाक्षहोराबलंसंपूर्णं ॥ ॥अथाग्रेअयनबलानयनार्थंक्रांतिआनयनचक्रंलिख्यते ॥ ॥आयनबलनोप्रथमक्रांतिआणीयइ ॥ ॥
अथक्रांतिमाह ॥ ॥तथाचसूर्यसिद्धांते ॥ ॥तत्वाश्विनौ २२५ कांघ्रिकृता ४४९ रूपभूमिधरर्त्तवः ६७१ खांकाष्टौ ८९० पंचशून्येशाः ११०५ ८०
बाणरूपगुणेंदवः १३५१ शून्यलोचनपंचैक १५२० छिद्ररूपमुनींदवः १७१९ वियच्चंद्राधृतयो १९१० गुणरंध्राचराश्विनः २९०३ मुनिषड्यम

नेत्राणि २२६७ चंद्रादिकेतदशिवका २४३१ पंचाष्टविषयाक्षीणि २५८५ कुंजराशिनगाश्विनः २७२८२ रंध्रपंचाष्टकयमा २८२९ वस्वड्यंकय

| | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| [illegible] | २२५ | २२२ | २१९ | २१५ | २१० | २०५ | १९९ | १९१ | १८३ | १७४ | १६४ | १५४ | १४३ | १३१ | ११९ | १०६ | ९३ | ७९ | ६५ | ५१ | ३७ | २२ | ७ | ० |
| खंडा | २२५ | ४४९ | ६७१ | ८९० | ११०५ | १३१५ | १५२० | १७१९ | १९१० | २०९३ | २२६७ | २४३१ | २५८५ | २७२८ | २८५९ | २९७८ | ३०८४ | ३१७७ | ३२५६ | ३३२१ | ३३७२ | ३४०९ | ३४३१ | ३४३८ |
| खंड म | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ |

मास्ततः २९७८ कृताष्टशून्यज्वलनः ३०८४ नागाद्रिशशिवन्हयः ३१७७३ षट्पंचलोचनगुणाः ३२५६ चंद्रनेत्राग्निवन्हयः ३३२१ यमाद्रिव-न्हिज्वलना ३३७२ रंध्रशून्यार्णवन्हयः ३४०९ रूपाग्निसागरगुणा ३४३१ वसुत्रिकृतवन्हयः ३४३८ प्रोक्ताक्रमेणवार्द्धदुक्रमाज्यार्द्धपिंडकाः ४ परमापक्रमज्यान्सप्तरंध्रगुणेंदवः १३५९३ तद्गुणाज्यातृजीवासप्ततत्वायसंक्रांतिरुच्यते ॥ ॥अथसंक्रांतिआनयनं॥ ॥ जिसग्रहकीसंक्रांतिकरइतिसग्रहकातात्कालिककर्मभूमोस्थाप्यकरी अयनांशजोडीजइजोड्यापछीजोराशिहोइउसराशिकुभाग३कादीजेशेषरहरपादीजइ॥ तीन ३कइभागजोविषमअंकपाइयेतोशेषजुतीनभागदीयांराश्यादिरह्याथातिसकीभुजज्याकरईभुजज्याकहीजईकलापिंडकरैजोतीनभागकीयासमअंकपाइयैतोशेषराश्यादिरारवाथासोतीन३राशिमांहिशोधीजईराशिअंककलाविकलाशेषकाकलापिंडकरईकलापिंडनुभा

ग २२५ कादीजइ लब्धं खंडी शेषं रक्षम् भूभागु देकरि खंडी पायइ याति सखंडी कई विवराई पोथी मांहि हुइ इते सविवराई कइ अंक साथि शेषराखाथा
सोगुणी जई गुणकरी पलानु भाग ६० लब्धं ऊर्ध्वयुतं शेषं रक्षणीयं ऊर्ध्वभाग २२५ कादीजई लब्धं घटी शेषं ६० गुणं पलानि योज्या भाग २२५ लब्धं
पल प्रथम ज्युं खंडी पाईथी तिस खंडी कई तल इजु अंक होई इतिन अंक मध्ये घटी पल जोडवा घटी पल जोड्य इथि जु होइ इतिस का नाम भुजज्या कहीज
ई उही भुजज्याने रहसइ सत्ताणवइ १३९७ साथि मयूरपदाकार गुणि करघटी पलनइ भाग ६०दीजई ॥ लब्धं ऊर्ध्वयुतं ऊर्ध्वभाग ३४३८ लब्धं क्रां-
तिज्यो जिस खंडी कइ ॥ अंक मांहि पडई तिस खंडी कई अंक मांहि पाडणा शेष पाड्यां पछी जु घटी पल रह्या हुई ते घटी पल दो सई पंचवीस
२२५ मयूरपदाकार गुणि हेठला अंकनई भाग ई ६० कादेणा लब्धांक ऊर्ध्वयुतं शेषं रक्षणीयं ऊर्ध्वभाग जिस खंडी कई अंक मांहि क्रांतिज्या पाडी
थी तिस खंडी कई अंक हेठ ई जु विचार अंक हुई तिन अंक का भाग देईल ब्ध घटी शेषं ६० गुणितं पलानि योज्य भाग्य पूर्वोक्त लब्धं पल ॥ पुनः जिस-
की खंडी मांहि क्रांतिज्या पाडी थी एक थी लेकरि चोवीस तांई २४ जिस आंक की खंडी मांहि पाडी थी तिस खंडी की आकृति करई जो घटी पल पाये थे तिस
मध्ये युक्त कीजई ॥ क्रांतिस्पष्ट हुई पुनः आकृति क्या कहीजई ॥ तिस खंडी मांहि क्रांतिज्या पाडी थी एक थी ले करी जो पहिला मांहि पाडी तो एक ए ८१
क होई मांहि पाडई तो ॥ दोई दूणा च्यार जोडिई तीन का मांहि पाडइ तो तीन की मांहि पडई तो तीन तीआ ९ जोडीए एवं सर्वत्र ज्ञेयं ॥ जिस ग्रह की क्रांति
करई सो उही ग्रह जिस गोल विषई होइ तिस ही गोल विषइ क्रांतिज्या कहीइ जो ग्रह अथ मांहि थी अंशक जोड्या थी शशी ६ थी अधिक होई तो तु-

लादिदक्षिणेकहीई॥ जोउसग्रहकीभीक्रांतिदक्षिणाकहीये॥ ॥इतिसंक्रांतिआनयनं॥ ॥अथअयनबलमाह॥ ॥क्रांतिसौम्याःस्वमिह
परमापक्रमेदक्षिणार्थंशुक्रादित्याकृतसुतमरुत्पूजितानांविधेयः॥व्यस्ताशीतद्युतिरविजयोस्स्वस्यनित्यंविधेयारामभ्यस्तात्तदनुपरमा
पक्रमेणोप्ययपेतां॥१५॥ग्राह्यंराशिप्रभृतिचपलंमोर्कीभूतमेतद्व्योमाकारंसद्विदरवकुभि१०८०००भाजयेदायनंस्यात्॥द्विघ्नंभानोरयन
जबलंपक्षवीर्यस्तथैंद्रोयुद्धेचष्टोर्विवरविहितंरवेटवीर्यांतरंहि॥१६॥ ॥टीका॥ ॥यदाशुक्रभौमगुरुइनकीउत्तरक्रांतिहोईतोपरमापक्रमम
ध्ये१४४० धनंकार्यं॥यदाशुक्रभौमगुरुइनकीक्रांतिदक्षिण होइतदापरमापक्रममध्ये१४४०ऋणंकार्यं॥यदाशनिचंद्रक्रांतिउत्तरहोइत-
दापरमापक्रममध्ये१४४० रिणंकार्यं॥यदाइनकीक्रांतिदक्षिणहोइतोपरमापक्रममध्ये१४४०धनंकार्यं॥यदाबुधक्रांति दक्षिण होईतो
परमापक्रममध्येधनंकार्यं ॥यदाबुधःक्रांतिउत्तरहोईतोपिणपरमापक्रममध्येधनंकार्यं॥बुधस्यसर्वदाधनं॥उणाधनकीयांपछीजोशे
षऊगस्थावईसोतीनसेती ३ गुणणागुणकरिभाग१४४० एभिअंकैर्दत्वालब्धंराशिशेषंत्रिंशद्गुणितं ३० भाग१४४० अंशशेषषष्टि ६० गु-
ण्यं ६० भाग१४४० लब्धंघटीशेषंषष्टि ६० गुणंभाग१४४० लब्धंपलइहक्रांतिराश्यादिहुईपुनः इसक्रांतिकाकलापिंड करई ॥ कलापिं
डनभाग१०८०० लब्धंरूपशेषंषष्टि ६० गुणंभाग१०८०० लब्धंकलाएवंविकलाजोरूपादित्रिस्थानकपायातिसकानामअयनबलकही
जई ॥ इसप्रकारअयनबलकरणा॥ ॥इतिअयनबलंसमाप्तम्॥ ॥अथचेष्टाबलमाह॥ ॥सूर्यकाअयनबलदूणाकरणा॥सूर्य

कानेष्टाबलहोईजोचंद्रमाकापक्षबलरूपादिकहोईसुदूणाकरणा ॥ चंद्रमाकाचेष्टाबलहोई ॥ इतिसूर्यचंद्रचेष्टाबलं ॥ तथाकेचिदाचार्याएवं
वदंति ॥ सूर्यकाअयनबलहुइसुसूर्यकाचेष्टाबलकरणा ॥ चंद्रमाकापक्षबलरूपादिकहोइसुचंद्रमाकाचेष्टाबलकरणा ॥ ॥इतिसूर्यचंद्रचे
ष्टाबलम् ॥ ॥अथभौमादिचेष्टाबलमाह ॥ ॥याम्योदकस्थः द्युचरविचरार्द्धेनयुक्ताचलोच्चान्मध्येस्पष्टादधिकवपुषिन्यूनकोवर्जितार्श्च ऊ
द्धात्स्पष्टग्रहमतिभवेत्तच्चचेष्टाप्यकेंद्रषड्राशिभ्योधिकमपनयोमंडलावृषकस्यं कृत्वालिप्तासतहृतनगजाभिः १०८०००रामंफलंयच्चेष्टावीर्य
तदिहगदितंहारिकेबुद्धिवृद्ध्यैः ॥२॥ ॥अस्यटीका ॥ ॥भौमादिकजिसग्रहकाचेष्टाबलकरईतोउसग्रहकासवीर्यबलंमध्यमथापणा ॥ पुनःउस
ग्रहतात्कालिकथापणा ॥ पुनःमध्यअरुतात्कालिकअंतरकीजई ॥ योयस्मात्पततिसतस्मात्पापः पाड्यापीछेजुरहइइतिकी अर्द्धकीजई ॥ अर्द्ध
धरिछोडणा ॥ यदातात्कालिकथापणापुनःमध्यतात्कालिकअंतरकीजई ॥ शीघ्रोच्चजोउसग्रहकावइसुउसअर्द्धमध्येयोज्य यदामध्यर्थी
तात्कालिकअधिकहोईतोउसग्रहकाशीघ्रोच्चउसअर्द्धमध्येयोज्य यदामध्यमर्थीपात्यपाड्यांजोड्यांपछीउसग्रहकातात्कालिकउसशेषम
ध्येपात्ययदानपततितदाचक्रंदत्वापात्यंअवशेषरहइसुउसग्रहकाचेष्टाप्यकेंद्रकहीयई ॥ ॥अथशीघ्रोच्चवार्ताभौमगुरुशनिइनग्रह
कीशीघ्रोच्चजोसूर्यकासवीर्यमध्यमहोईसुइनकाशीघ्रोच्चकहीयई ॥ बुधशुक्रकाशीघ्रोच्चइनहीकाजोसवीर्यमध्यमहोइसोइनकाशीघ्रोच्च ८२
कहीजई ॥ तंपूर्वोक्तंचेष्टाप्यकेंद्रांककर्मभूमौस्थाप्ययदाराश्याधिकंभवतितदाचक्रमध्येशोध्यशेषंलिप्तांकार्यम् ॥ लिप्तापिंडनईभाग१०८००

एभिरंकैर्दीयतेलब्धंचेष्टाबलत्रिस्थानिकरूपाद्दि॥ ॥इतिभौमादिकचेष्टाबलम्॥ ॥अथनैसर्गिकबलमाह॥ ॥मंदावनीसूनुशशांकपुत्रा
वागीशशुक्रेंदुदिवाकराणाम्॥एकोत्तरंरूपनगैर्विभक्तंनैसर्गिकंवीर्यमुदाहरंति॥१॥ ॥अस्यटीका॥ ॥जउशनिनिसर्गिबलकरईतोएक१
थापीइ॥भाग७दीजइलब्धंरूप०शेषंषष्टि६० गुणंभागं७ लब्धंकला८ विकला३४ एशनिकानिसर्गबलम्॥भौमअंक२स्थाप्यभाग७लब्धं
रूपादित्रिस्थानकबुधकाअंक३ थापीईभाग७लब्धंरूपादित्रिस्थानिक गुरुका अंक४ थापीयईभाग७लब्धंरूपादित्रिस्थानिकशुक्रकाअंक
५थापीजईभाग७लब्धंरूपादित्रिस्थानिकचंद्रमाकाअंक६ थापीजइभाग७लब्धंरूपादित्रिस्थानिकनैसर्गिकबलचक्रसदाएहीजसूर्यादि
लिखीईजन्मपत्रीयईसूर्यकाअंक७ थापीजईभाग७लब्धंरूपादिस्थानकइप्रकारइनैसर्गिकबलकरणातच्चक्रमिदम्॥ ॥इतिनैसर्गिकबलं
॥ ॥अथदृष्टिबलमाह॥ ॥उक्तानियस्माद्बहुधाफलानिव्योमौकसांदृष्टिसमुद्भवानि॥तस्मात्प्रवक्ष्यानय
नंहिदृष्टेर्होराविदांदृक्फलनिर्णयोयम्॥१॥दृश्योदृशाचरहिततनुःषड्ग्रहेभ्योधिकश्चेद्भूस्त्यःशोध्योविहि
तकलिकःखाभ्रपद्माद्विभक्तः॥दृष्टिःसास्याद्यदिरसग्रहेभ्योधिकःपंचहीनोलिप्तीभूतोधृतिशत१८००
इतःस्याच्चतुर्भाधिकश्चेत्॥२॥उक्तेभ्यःपाठः॥एकोनकश्चेत्पाठः॥द्वद्वेकपादपाठः॥५॥ ॥अस्यटीका॥ ॥जिसग्रहकीदृष्टिबलकरइतिसग्रह
तात्कालिककर्मभूमौस्थाप्यतेथापिकरिउसग्रहनुदेखताजोयहउसग्रहकातात्कालिकमध्येउसग्रहकातात्कालिकपात्ययदानपततितदाचक्रंद-

| श | मं | बु | गु | शु | चं | रवि |
|---|---|---|---|---|---|---|
| ८ | ० | ० | ० | ० | ० | ० |
| ३४ | १७ ८ | २५ ४३ | ३४ १७ | ४२ ५१ | ५९ २५ | ० ० |

त्वापात्यतेपात्यावशेषेयदा षड्राश्यधिकंभवतितदादश १० मध्येशोध्यपश्चात्कलापिंडंक्रियतेकलापिंडनुभाग २२०० दीजईलब्धंरूपादित्रि
स्थानकदृष्टिपुनर्दर्शनीयोग्रहः निरीक्षकोणग्रहेणपात्यः पात्यावशेषेयदापंच ५ राश्यधिकंभवतितदापंचपात्यः॥ शेषंलिप्तापिंडंकुर्यात् १८००
लब्धंरूपादित्रिस्थानिकदृष्टिः पुनर्दर्शनीयोग्रहः निरीक्षकेणपात्यः पात्यावशेषंयदाचतुर्भागाधिकंभवतितदापंचमध्येशेषंकलापिंडंकुर्यात् ॥
३६०० भागलब्धंत्रिस्थानकदृष्टिः दर्शनीयोग्रहः निरीक्षकेणग्रहेणपात्यपात्यावशेषेयदारामा ३ धिकंभवतितदावेद ४ मध्येशोध्यः शेषंकलापिंडंका
र्यंभाग ३६०० एभिरेकैर्दीयतेलिप्तापिंडमध्येयोज्यपश्चाद्भाग ७२०० लब्धंरूपादित्रिस्थानकदृष्टिः दर्शनीयोग्रहः निरीक्षकेणग्रहेणपात्यः पा
त्यावशेषेयदायुग्माधिकंभवतितदायुग्मपरित्याज्यः शेषकलापिंडकरइकलापिंडमध्ये ९०० एतान्यंकानियोज्याभाग ३६०० लब्धंरूपादित्रिस्था
निकदृष्टिः दर्शनीयोग्रहः निरीक्ष्यकेणग्रहेणपात्यपात्यावशेषेयदाएक १ तईअधिकहोईतो १ पाडणाशेषकलापिंडकरईभाग २७०० लब्धरू-
पादित्रिस्थानकदृष्टिः॥ इणप्रकारिसूर्यादिदृष्टिवर्तनीयदादर्शनीयोग्रहः निरीक्षकेणग्रहेणपात्यः पात्यावशेषेयदादश १० राशिथीअधिकहो
ईतोभीदृष्टिनास्तिअपरविशेषमाह॥ यत्रस्थानिकशनिहोइतिहांतइतीसरईतथादशमैंजोग्रहहोइतीसग्रहकीदृष्टिजोवर्तीआइबइतिसमांहि
कला १५ अन्ययुतदृष्टिर्भवति॥ यत्रस्थानिकग्रहहोइतिहोइतिहार्थीनवमैंतथापांचमैंजोग्रहहोइतिग्रहकीदृष्टिमांहिकला ३० अवुरजोडइदृष्टिहो
इ॥ यत्रस्थानिकभौमहोइतिसथीआठमईतथाचोथइजोग्रहहोइतिसग्रहकीदृष्टिमध्येकला १५ औरजोडीजईदृष्टिहोई॥ सौम्येदृष्टेदृष्टिसूर्ये

तुर्यांशुयुक्तपाठः॥ ॥अस्यटीका॥ ॥इसग्रहकीदृष्टिवर्तिआई छइतिसमांहिजोसौम्यग्रहकीदृष्टिहुइसोजुदीजोडीजई।।जोड्यांथीपापग्रहांथी
सौम्यग्रहाकीदृष्टिअधिकहोईतोसौम्यग्रहकीदृष्टिद्वितीयस्थानेस्थाप्यभाग४लब्धंरूपादित्रिस्थानकएजोलब्धकलाविकलाछईसुद्वितीयस्थान
कसौम्यग्रहकीदृष्टिथापीथीतिसमध्येयुतःपुनःअस्यमध्येपापग्रहकीदृष्टियुतंजोड्यांहोईसोदृष्टिबलउतनाषरडइमध्येउसग्रहका लिखेजोजो
ड्यांतइसौम्यग्रहकीदृष्टिथई पापग्रहकीदृष्टिअधिकहोईतोपापग्रहकीदृष्टिद्वितीयस्थानेस्थाप्य॥पुनःएकस्थानिकभाग ४ दीजईलब्धंरू
पादिकलाविकला॥रूपादिकलाविकलापाईसोद्वितीयस्थानिकजोपापग्रहाकीथापीथीतिसमध्येरूपादिपात्यःपुनःसौम्यग्रही दृष्टिअस्यम-
ध्येयोज्यजोहोइसोउसग्रहकीदृष्टीबललिखीई॥ ॥इतिदृष्टिबलं॥इतिसूर्यादिचतुर्विंशतिबलटीकासंपूर्णा॥ ॥पुनःसूर्यादिचतुर्विंशतिबल
योज्यजोड्यांतईजोरूपादिहोइसोउतनातिसग्रहकाबलकहणा॥ ॥अथलग्नबलमाह॥ ॥लगनस्यापिस्वामीवीर्यंहिवीर्यंइतिपाठः॥ लग्नको
स्वामीजुग्रहहोइतिसकाजोजोड्यांतई वोसत्माषिहोईसोलग्नबलधरणालग्नबलहोई॥ ॥अथलग्नदृष्टिमाह॥ ॥पुनःसूर्यादिदृष्टिकरीव
इत्युंहीलग्नकीदृष्टिकरई॥कीयांतइजोवर्तीआवइसोलग्नदृष्टिबलकहीयई॥पुनःज्युंलग्नकीदृष्टिबलवर्त्याहूंतीआवीवई॥ सुसौम्यग्रहकी
जुदीजोडई॥जोड्यांथीसौम्यग्रहकी अधिकीहोइतोकला१५ अन्ययुतं॥पश्चात्पापकीजोडई॥ जोड्याथीसौम्यग्रहकीअधिकीहोइतोक
ला१५ अन्ययुतं॥पश्चात्पापग्रहकीदृष्टियुतंदृष्टिबलहोई॥जोड्यांतईपापग्रहकीदृष्टिबलसौम्यथीअधिकहोईतोकला१५पात्यावशेषेसौ

स्यग्रहकीदृष्टियोज्यदृष्टि होईजोलग्ननई गुरुकिंवाबुधपूर्णदृष्टिदेखईतोउनकीजुदृष्टिवर्तीआईचई ॥ सोलग्नदृष्टिमध्येजोडीयैलग्नदृष्टि होइ
॥ लग्नकास्वामीकीजितनाबलआयावैसो २४ चोवीसप्रकारदृष्टिविनाबल २३ तेवीसजोज्यजुहोईसोलग्नबलकहीयई चोवीससमाबलकीजाइ
गालग्नदृष्टिबलजोडईलग्नबलकरणाविशेषमाह॥ ॥ पुनः जोउनराशिमिथुनकन्यातूलधनपूर्वार्द्धकुंभलग्नजोहोइतोलग्नकाबलमध्येरूप १ अ
न्ययुतं ॥ लग्नबलंभवति ॥ पुनः जोचोपदलग्नहोइतोमेषासिंहधनुकाअपरार्द्धमकरकापूर्वार्द्धजोएलग्नहोइतोकलाशाअन्ययुतबलहोई ॥ पुनः
जोजलचरराशिलग्नहोईतोकर्कमकरार्द्धपश्चिममीनलग्नहोईतोकला ३० लग्नकाबलमध्येअन्ययुतं ॥ इणप्रकारलग्नबलकहीयई॥ ॥ इतिल
ग्नबलम्॥ ॥ नृभेक्षिपेचरूपकं १ चतुष्पदाप्ययोर्बलं॥ नकीटभेनकिंचनंस्फुटंभवेत्ततोबलं ॥१॥ ॥ इतिविशेषलग्नमध्येयुतम्॥ ॥ जलभचतुष्प
दकीटभसंज्ञासुखदशमास्तगताबलवंतः॥ जिनजिनसप्तमगाबलास्तितद्विनरागैरनुपातविधिःपातः॥२॥ इतिसूर्यादिलग्नांतर्बलंसंपूर्णम्॥ ॥
इतिश्रीपतिपद्धतौचतुर्विंशतिबलाधिकारटीकासमाप्ता॥ ॥ अथाष्टकवर्गटीकालिख्यते॥ ॥ कोठाऊभा ११२ थापणा थापकारीराशि १२ थाप
णी जिसलग्नईसूर्यादिकजोइग्रहरह्याहोईसो आदिथापणा ॥ ओरजोजिणराशिग्रहरह्याहोइसोतिमहीथापणा ॥ पुनः ८ आठकोठा
आडाथापणा पछइ पछईसूर्यचसूर्यपुत्रइतिपाठः॥ अपरपाठे॥ सूर्यसौरिजजीवाश्वशुक्रोभौमोबुधस्तथा ॥ चंद्रोलग्नंक्रमातूस्थाप्योष्टक ८४
वर्गेबुधैर्ग्रहाः॥१॥ इणभांति ८ कोठेथापणाथापिकरिविशेषईहुरेषाबिंदुघालणकीयुक्तिजिसग्रहकीयुक्तिजिसग्रहकीरेषाबिंदुघाल्या-

चाहिजइस्कूग्रहविचारीयई ॥ जोग्रहजिसलग्नपड्याहोइ तिसकाकोठाआदिदेकरिजितनासारावली मांहिअंकस्करेषा ॥ अन्यत्रविंदुजाणणा ॥ ॥ अथविंदुरेषाविश्वाकाढणकीयुक्तिजिसग्रहकीरेषा बिंदुसमडयाजोइजई तिसग्रहकोतात्कालिकअंशविचारीजई ॥ अंशविचारीकरीजिसलग्नग्रहोइ तिसतलई ॥ कोठा८ प्रमाणविचारीयई ॥ ॥ अथविश्वाविचार ॥ ॥ अंश३ घटी ४५ पहिलेकोठाविश्वा २ ॥ पुनः अंश ७ घटी ३० दूजईकोठइ ॥ विश्वा ५ घटी १५ तांइकोठइ ३ विश्वा ७ साढासात ॥ पुनः अंश १५ घटी० तांईकोठी छठेविश्वा १५ अंश २६ घटी १५ तांईकोठई ॥ सातमविश्वासाढा १७ ॥ पुनः अंश ४। ३० घटी० तांईकोठेपाई आठमेंविश्वा २० जाणणा ॥ पुनः रेषाबिंदुजाणणाकीयुक्तीजिसअंशगि-णयाजिसकइकोठई आवइतिसकइकोठईरेषाहोईतोग्रहरेषाकहीजई ॥ जोअंशविचारवांकोठेबिंदु आवइतोग्रहबिंदुकहणा ॥ रेषाबिंदुविश्वासमडिएधरणारेखाग्रहहोइतो रेषागिणिविश्वाधरणा बिंदुहोइतोबिंदुगिणिविश्वाधरणा ॥ पुनः सूर्यराशिदिन ३० रहइ ॥ आठेठामेंवांटीयेसूर्यदिन ३ घटी ४५ एकएकठामेंरहईचंद्रमाघटी १७ मंगलदिन ५ घटी ३७ बुधदिन ३ घटी ४५ गुरुमास ४ दिन १८ घटी ५४ शुक्रकादिन ३ घटी ५१ शनिमास ३ दिन २२ हुइप्रमाणजाणीजई ॥ ॥ इतिअष्टवर्गविश्वाकारणविधिः समाप्ताचेयं ॥ ॥

| र | चं | मं | बु | गु | शु | श | ग्रहाः |
|---|---|---|---|---|---|---|---|
| ५ | ४ | १।८ | ६।३ | ५।१२ | २।७ | १०।११ | स्वगृ |
| १ | २ | १० | ६ | ४ | १२ | ७ | उच्च |
| ७ | ८ | ४ | १२ | १० | ६ | १ | नीच |
| ५ | २ | १ | ६ | ९ | ७ | ११ | मू·त्रि· |
| शु श | ० | बु | चं | शु बु | चं सू | सू चं शु | शत्रु |
| बु | शु बृ श मं | शु श | बृ मं श | श | मं चं | बृ | सम |
| चं मं बु | बु सू | बृ चं सू | सू शु | सू चं मं | बु श | बु शु | मित्र |

अथाष्टकवर्गफलंलिख्यते ॥ ॥ प्रथमंरविरेषाफलं ॥ ॥ तद्यथा ॥ ॥ वर्त्तनेरविरेषाच्चशत्रूणांचपराजयं ॥ साहसात्सिद्धिरेवात्रभावजेयमुपस्थिता ॥ १ ॥ अथबिंदुफलं ॥ बिंदुःसकष्टफलदोमहाव्यसनकारकः ॥ रोगशोकप्रदाताच्चनृपोद्वेगमकारणात् ॥ २ ॥ सूर्यरेषाप्रमाणंदिन ३ घटी

| | |
|---|---|
| सूर्याष्टकरेषा ४८ दिन ३ घटी ४५ | चंद्राष्टकरेषा ४९ घ॰ १२ विक ४९ |
| सूर्यात् १२४७८९१०११<br>सौरात् १२४७८९१०११<br>जीवात् ५६९११<br>शुक्रात् १०६७१२<br>भौमात् १२४७१०११८४<br>बुधात् ३५६८९१०१११२<br>चंद्रात् ३९१०११<br>लग्नात् ३४६१०१११२ | चंद्रात् १३६७११११<br>सूर्यात् ३६७८९१०११<br>सौरात् ३५६११<br>जीवात् १४७८९१०११<br>शुक्रात् ३४५७४०<br>भौमात् २३५६८११<br>बुधात् १३४५७८९<br>लग्नात् ३६१०११ |
| भौमा॰क दि ५ घ ३ विप ३९ रेषा ४० | बुधाष्ट॰घ॰ दि ३ घटी १७ रेषा ५४ |
| भौमा॰ १२४७८९ ११<br>सूर्यात् ३५९१०११<br>सौरात् १४७८९१.११<br>जीवात् ६१०१११२<br>शुक्रात् ६८१११२<br>बुधात् ३५८११<br>चंद्रात् ३६१०११<br>लग्नात् १३६१०११ | बुधा॰ १२५९४१-१११२<br>सूर्या॰ ५६९१११२<br>सौरा॰ १२४७८८९॰११<br>जीवा॰ ६८१११२<br>शुक्रा॰ १२३४७८४१॰१<br>भौमा॰ १२४७८८९१०११<br>चंद्रा॰ २४८८९१०११<br>लग्ना॰ १२४६८९१०११ |
| जीवाष्टकमा॰ १ दि॰ १८ घ॰ ५४ वि॰ ५६ रे॰ ५६ | शुक्राष्ट॰रेषा ५१।२ दि॰ ३ घ॰ ५ प॰ ५१ |
| जीवा॰ १२३४७८९१०११<br>सूर्या॰ १२३४७८९१॰११<br>सौरा॰ ३५६१२<br>शुक्रा॰ २५६९१॰११<br>भौमा॰ १२४७८९॰११<br>बुधा॰ १२४५६९१॰११<br>चंद्रा॰ १५७८११<br>लग्ना॰ १२४५६७९१०११ | शु॰ १२३४५८४१॰११<br>सू॰ ८१११२<br>सौ॰ ३४५८९१०११<br>जी॰ ५८९१०११<br>भौ॰ ३५६८१११२<br>बु॰ ३५६९११<br>चं॰ १२३४५८९१११<br>ल॰ १२३४५८९१ |
| शन्यष्टकवर्गरेषा ३९ मा॰ १ दि॰ २२ घ॰ २२ | लग्नाष्टकवर्गरे॰ ३९ |
| सौरा॰ ३५६११<br>सूर्या॰ १२४७८९॰११<br>जीवा॰ ५९१११२<br>शुक्रा॰ ६१११२<br>भौमा॰ ३५६१०१११२<br>बुधा॰ ६८९१११२<br>चंद्रा॰ ३६११<br>लग्ना॰ ३९६१०१११४ | लग्ना॰ १४५७९१<br>सूर्या॰ ३६१०११<br>सौरा॰ ३६१०११<br>जीवा॰ १४५७९१०<br>भौमा॰ ३६१०११<br>बुधा॰ १४५७९१०<br>चंद्रा॰ ३६११<br>शुक्रा॰ ३७८१२ |

४५ ॥ ॥ अथचंद्ररेषाफलं ॥ ॥ ददातिशशिरेषाच्चवस्त्राभरणभूषणं ॥ लभतेप्रभुसन्मानंकर्मप्राप्तिमिवांबरम् ॥ १ ॥ ॥ अथचंद्रबिंदुफलं ॥ ॥ बिं

दुःकष्टफलंचैवकलहंवैरिभिःसह॥ दुःस्वप्नदर्शनंनित्यंधननाशमवाप्नुयात्॥१॥ ॥अथभौमरेषाफलं॥ ॥ददातिभौमजारेषाअर्थप्राप्तिः
सदैवहि॥ आरोग्यमायुर्वृद्धिश्चकायकांतिंप्रदापयेत्॥२॥ ॥अथभौमबिंदुफलं॥ ॥ बिंदुस्तस्यफलंशस्त्रदरुव्याग्निरुजस्सदा॥ शिरःशूलः
प्रजायेतरक्तपित्तरुजोभवेत्॥१॥ ॥अथबुधरेषाफलं॥ ॥ बुधस्यरेरवयासौरव्यंमिष्टान्नंलभतेसदा॥ दानधर्मरतश्चैवहिद्विजदेवाग्नि
पूजकः॥१॥ ॥अथबुधबिंदुफलं॥ ॥बिंदुर्भंगप्रदश्चैवकलहंवैरिभिःसह॥ दुःस्वप्नदर्शनंनित्यमवेलाभोजनंतथा॥२॥ ॥अथगुरुरे
षाफलं॥ ॥रेषाजीवेजनयतिसदावित्तसौरव्यादिपुष्टिंजायाभोगंजनयतिसदाशत्रुहंताचनित्यं॥ मानोत्साहोविभवमतुलंवस्त्रहेमादिवृ-
द्धिंप्राप्यंसौरव्यंभवतिमतुलंबंधुवर्गोपहारं॥१॥ ॥अथगुरुबिंदुफलं॥ ॥बिंदुःकष्टंविगतधनधीर्मानसंवित्तचिंतामार्गेभंगंजनयतिसदा
पातनंवाहनाद्वा॥ लोकादिष्टंभवतिकलहंवाङ्मयेनार्दमानंशत्रुद्वेषव्ययमपिसदासाहसात्कार्यहानिः॥२॥ ॥अथशुक्ररेषाफलं॥ ॥शुक्रेरे
षाजनयतिनरंराज्यसन्मानवृद्धिंकन्यालाभंसुसुरववपुषंदीर्घमायुश्चधत्ते॥ कैश्चित्क्रीडाभवतिबहुधाज्ञानमेकार्थसिद्धिंलक्ष्मीलाभंजनयतिसु
खंसौरव्यसंपत्तिवृद्धिं॥१॥ ॥अथशुक्रबिंदुफलं॥ ॥बिंदुःकष्टंभवतिहिरिपोर्वित्तनाशप्रदात्रीजायापीडाकलहमतुलंभूमिनाशंचकष्टं॥बुद्धिभ्रं
शंव्ययमतिसदापातनंवाजिभिर्वामार्गेभंगंजनयतिसदासर्वकालंजनानां॥२॥ ॥अथशनिरेषाफलं॥ ॥सौरेरेषाजनयतिफलंभृत्यहेत्वर्थसंपत्कार्ये
प्राप्तिंनृपतिसचिवंसाधुसंपर्कदाता॥ भूमिप्राप्तिंकितवजयतास्नानदानार्चनेषुमिष्टान्नंस्यान्नृपतिवरदंधान्यसस्येषुवृद्धिः॥१॥ ॥अथशनिबिंदुफलं

॥ ॥ बिंदुःकष्टंनृपतिभयदंबंधुपीडाविवृद्धा धातोःशस्त्रैर्विषमपतितैर्वित्तसंहारकर्ता ॥ चित्तोद्वेगोभवतिबहुधाभूमिनाशंकलिंवाबुद्धिभ्रंशंभ
वतिचसदावाहनेहानिरेव ॥२॥ ॥इतिसप्तग्रहाणांबिंदुरेषाफलंसमाप्तं॥ ॥अथसर्वाष्टकवर्गकरणविधिः॥ ॥जिणलग्नमांहिजन्म
होइतेलग्नधुरमांडीजै ॥ पछेबारेकोठेअनुक्रमैंलग्नमांडीजै पछई अष्टकवर्गकीआठकुंडलीमांहिजिणेलग्नेजितीरेषाहोइतिणलग्नकीतेती
रेषासर्वाष्टवर्गइतिणलग्नइमांडीजई ॥ पछइजोसठिहूंतीजेतीरेषाघाटिहोइतेताबिंदुतिणलग्नथापीजई ॥ पछइअनुक्रमइएक१बरसहूंती
मांडीजितराबरसरोआयुवर्त्योंहुवइतितनाबरसअनुक्रमलिखीयै ॥पछेघणाबिंदुतिणबरसईकष्टकघणीरेषातिनबरइसुख॥ ॥इतिसर्वाष्ट
कवर्गविधिः॥ ॥अथसर्वाष्टकवर्गरेषाफलं॥ ॥मरणंचतुर्दशभिःसक्रूरैःपंचदशभिर्वा ॥ षोडशभिरंगपीडाभवतिशरीरेमहाव्याधिः॥१॥स
प्तदशभि१७ दुःखमष्टादशभिर्धनक्षयःप्रोक्तः॥ बांधवपीडाबह्वीभवतितथैकोनविंशत्या ॥२॥ व्ययकलहौविंशतिभिर्गदोदुःखंतथैकविंशत्या
॥ कुमतिर्द्वाविंशतिभिर्दैन्यंचपराभवोविफलं॥३॥ नूनंत्रिवर्गहानिर्भवतिनराणांत्रिविंशतिभिर्नित्यं ॥ द्रव्यक्षयस्त्वकस्माद्विंशतिभिश्चतुर्भिर-
धिकाभिः॥४॥ करतलगतमपिचधनंनपश्यतिनराणांपंचविंशतिभिः॥ षड्विं
शतिभिःक्लेशःसमंतास्यात्सप्तविंशतिभिः॥५॥ अष्टाधिकयाविंशत्याद्रव्या
गमनंयथासुखंभवति ॥ एकोनत्रिंशतिभिर्लोकेषुनरःपूज्यतामेति॥६॥ मानंसुकृ

| र | चं | मं | बु | गु | शु | श | पर |
|---|---|---|---|---|---|---|---|
| ० | १ | ९ | ५ | ३ | ११ | ६ | मैथ्रि |
| १० | ३ | २८ | १५ | ५ | २७ | २० | पंचः |

| र | चं | मं | बु | गु | शु | श | ० |
|---|---|---|---|---|---|---|---|
| १५ | २५ | १५ | २२ | १५ | २१ | २० | ० |

